॥ अथ पंचमी ॥

इंद्रासोमा युवमंग तरुत्रमपत्यसाचं श्रुत्यं रराथे ।
युवं शुष्मं नर्यं चर्षणिभ्यः सं विव्यथुः पृतनाषाहमुग्रा ॥५॥
इंद्रासोमा । युवं । अंग । तरुत्रं । अपत्यऽसाचं । श्रुत्यं । रराथे इति ।
युवं । शुष्मं । नर्यं । चर्षणिऽभ्यः । सं । विव्यथुः । पृतनाऽसहं । उग्रा ॥५॥

इंद्रासोमा हे इंद्रासोमौ युवं युवां तरुत्रं तारकमपत्यसाचं संतानयुक्तं श्रुत्यं श्रवनीयं रयिं धनमंग क्षिप्रं रराथे । अस्मभ्यं धत्थः । किंचोग्रा हे उद्गूर्णाविंद्रासोमौ युवं युवां नर्यं नृभ्यो हितं पृतनासहं शत्रुसैन्याभिभावुकं शुष्मं बलं चर्षणिभ्यो मनुष्येभ्यः ॥ कृष्टयश्चर्षणय इति मनुष्यनामसु पाठात् ॥ संविव्यथुः । समतनुतं । परिवेष्टयथो वा ॥

॥ इति पंचमस्य प्रथमे षोडशो वर्गः ॥

यो अद्रिभिदिति तृचं द्वादशं सूक्तं बार्हस्पत्यं भरद्वाजस्यार्षं त्रैष्टुभं । तथा चानुक्रांतं । यो अद्रिभित्तृचं बार्हस्पत्यमिति ॥ आभिप्लाविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे स्तोमातिशंसनार्थमिदं सूक्तं । सूत्र्यते हि । यो अद्रिभिद्यज्ञे दिव इति सूक्ते । आ० ७.९. ॥ वाजपेये बार्हस्पत्ये चरौ बृहस्पतिः समजयद्वसूनीति ··· त्वामीळते अजिरं दूत्याय । आ० ९.९. । इति ॥

॥ तत्र प्रथमा ॥

यो अद्रिभित्प्रथमजा ऋतावा बृहस्पतिरांगिरसो हविष्मान् ।
द्विबर्हज्मा प्राघर्मसत्पिता न आ रोदसी वृषभो रोरवीति ॥१॥
यः । अद्रिऽभित् । प्रथमऽजाः । ऋतऽवा । बृहस्पतिः । आंगिरसः । हविष्मान् ।
द्विबर्हऽज्मा । प्राघर्मऽसत् । पिता । नः । आ । रोदसी इति । वृषभः । रोरवीति ॥१॥

यो बृहस्पतिरद्रिभित्पणिभिर्विरचितानां शिलोच्चयानां भेत्ता मेघानां विदारको वा ॥ अद्रिर्ग्रावेति मेघनामसु पाठात् ॥ प्रथमजाः प्रजापतेर्वीर्यात् प्रथमं जात ऋतावा सत्यवान् उदकवान्वांगिरसः पश्चाज्जातः । तथा च निगमः । येऽंगारा आसंस्तेऽंगिरसोऽभवन्यदंगाराः पुनरवशांता उददीप्यंत तद्बृहस्पतिरभवत् । ऐ० ब्रा० ३.३४. । इति । हविष्मान् यज्ञभागवान् द्विबर्हज्मा द्वयोर्लोक-

योर्वृहितगमनः प्राधर्मसत् प्रकर्षेण दीप्तस्थाने वर्तमानो नोऽस्माकं पिता पालयिता भवति स बृहस्पतिर्वृषभो वर्षकः सन् रोदसी द्यावापृथिव्यावारोरवीति। अभिगर्जति ॥

॥ अथ द्वितीया ॥

जनाय चिद्य ईवत उ लोकं बृहस्पतिर्देवहूतौ चकार।

घ्नन्वृत्राणि वि पुरो दर्दरीति जयञ्छत्रूँरमित्रान्पृत्सु साहन् ॥२॥

जनाय। चित्। यः। ईवते। ऊं इति। लोकं। बृहस्पतिः। देवऽहूतौ। चकार।

घ्नन्। वृत्राणि। वि। पुरः। दर्दरीति। जयन्। शत्रून्। अमित्रान्। पृत्ऽसु। सहन् ॥२॥

अपि च यो बृहस्पतिर्देवहूतौ यज्ञे वर्तमानायेवत उपगच्छते स्तोत्रे जनाय लोकं स्थानं चकार करोति। चिदिति पूरणः। स वृत्राण्यावरकाणि तमांसि घ्नन्निवारयन् पृत्सु युद्धेषु शत्रून् जयन् अमित्रान् सहन् अभिभवन् पुर आसुरीः पुरीर्विदर्दरीति। भृशं विदारयति ॥

॥ अथ तृतीया ॥

बृहस्पतिः समजयद्वसूनि महो व्रजान् गोमतो देव एषः।

अपः सिषासन्त्स्व१रप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥३॥

बृहस्पतिः। सं। अजयत्। वसूनि। महः। व्रजान्। गोऽमतः। देवः। एषः।

अपः। सिसासन्। स्वः। अप्रतिऽइतः। बृहस्पतिः। हंति। अमित्रं। अर्कैः ॥३॥

देवो द्योतमान एष प्रसिद्धो बृहस्पतिर्वसूनि पणीनामसुराणां वलस्य वा धनानि महो महतो गोमतो गोसहितान् व्रजांश्च समजयत्। तथा च निगमौ। बृहस्पतिर्गोवपुषो वलस्य निर्मज्जानं न पर्वणो जभार। ऋग्वे॰ १०.६८.९.। इति। दूरमित पणयो वरीय उद्गावो यंतु मिनतीर्ऋतेन। बृहस्पतिर्या अविंदन्निगूळ्हाः सोमो ग्रावाण ऋषयश्च विप्राः। ऋग्वे॰ १०.१०८.११.। इति। किंच बृहस्पतिरप्रतीतः केनाप्यप्रतिगतः सिषासन् संभक्तुकामः स्वः स्वर्गस्यामित्रमसुरमर्कैरर्चनसाधनैर्मंत्रैर्हंति। अर्को मंत्रो भवति यदेनेनार्चंति। नि॰ ५.४.। इति यास्कः ॥

॥ इति पंचमस्य प्रथमे सप्तदशो वर्गः ॥

सोमारुद्रेति चतुर्ऋचं चयोदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं सोमारुद्रदेवताकं। अनुक्रम्यते च। सोमारुद्रा चतुष्कं सोमारौद्रमिति ॥ विनियोगो लैंगिकः ॥

॥ तत्र प्रथमा ॥

सोमारुद्रा धारयेथामसुर्यं१ प्र वामिष्टयोऽरमश्नुवंतु।
दमेदमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे ॥१॥
सोमारुद्रा। धारयेथां। असुर्यं। प्र। वां। इष्टयः। अरं। अश्नुवंतु।
दमेऽदमे। सप्त। रत्ना। दधाना। शं। नः। भूतं। द्विऽपदे। शं। चतुःऽपदे ॥१॥

सोमारुद्रा हे सोमारुद्रावसुर्यमसुरसंबंधि बलमस्मासु धारयेथां। किंच दमे दमे सर्वेष्वस्मद्गृहेष्विष्टयो यज्ञा वां युवामरमलं पर्याप्तं प्राश्नुवंतु। प्रकर्षेण व्याप्नुवंतु। अपि च युवां सप्त रत्ना रत्नानि दधाना धारयंतौ नोऽस्मभ्यं शं सुखकरौ सुखरूपौ वा भूतं। भवतं। द्विपदेऽस्मदीयाय पुत्रादये चतुष्पदे पश्वादये च शं भूतं। भवतं ॥

॥ अथ द्वितीया ॥

सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश।
आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रवसानि संतु ॥२॥
सोमारुद्रा। वि। वृहतं। विषूचीं। अमीवा। या। नः। गयं। आऽविवेश।
आरे। बाधेथां। निःऽर्ऋतिं। पराचैः। अस्मे इति। भद्रा। सौश्रवसानि। संतु ॥२॥

सोमारुद्रा हे सोमारुद्रौ नोऽस्माकं गयं गृहं गृहगतं प्राणिजातं वा यामीवा यो रोग आविवेश तां विषूचीं विष्वक् सर्वतो गच्छंतीममीवां विवृहतं। वियोजयतं। अपि च निर्ऋतिमलक्ष्मीं पराचैः पराग्यथा भवति तथारे दूरे बाधेथां। निवारयतं। अस्मे अस्माकं भद्रा भद्राणि सौश्रवसान्यन्नानि यशांसि च संतु। भवंतु। सुश्रवसो भावः सौश्रवसं। श्रवोऽन्नं यशश्च ॥

॥ अथ तृतीया ॥

सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तं।
अव स्यतं मुंचतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ॥३॥

सोमारुद्रा । युवं । एतानि । अस्मे इति । विश्वा । तनूषु । भेषजानि । धत्तं ।
अव । स्यतं । मुंचतं । यत् । नः । अस्ति । तनूषु । बद्धं । कृतं । एनः । अस्मत् ॥३॥

हे सोमारुद्रौ युवं युवामस्मे अस्माकं तनूष्वंगेष्वेतानि प्रसिद्धानि विश्वा सर्वाणि भेषजानि धत्तं । धारयतं । किंच नोऽस्माकं तनूष्वंगेष्वस्माभिः कृतं बद्धं च यदेनः पापमस्ति विद्यते तत्पापमवस्यतं । क्षपयतं । स्रथयतं । शिथिलबंधं कुरुतमित्यर्थः । अस्मदस्मत्तो मुंचतं च ॥

॥ अथ चतुर्थी ॥

तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्राविह सु मृळतं नः ।
प्र नो मुंचतं वरुणस्य पाशाद्गोपायतं नः सुमनस्यमाना ॥४॥

तिग्मऽआयुधौ । तिग्महेती इति तिग्मऽहेती । सुऽशेवौ । सोमारुद्रौ । इह । सु ।
मृळतं । नः ।
प्र । नः । मुंचतं । वरुणस्य । पाशात् । गोपायतं । नः । सुऽमनस्यमाना ॥४॥

हे सोमारुद्रौ तिग्मायुधौ दीप्तधनुष्कौ तिग्महेती तीक्ष्णशरौ सुशेवौ शोभनसुखप्रदौ सुमनस्यमाना शोभनं मनः स्तोत्रमिच्छंतौ सुमनस्यमानौ स्तूयमानौ सुमनसौ वा संतौ युवामिह लोके नोऽस्मान् सु अत्यंतं मृळतं । सुखयतं । नोऽस्मान्वरुणस्य पाशात्प्रमुंचतं । नोऽस्मान् गोपायतं । आपद्भ्यो रक्षतं च ॥

॥ इति पंचमस्य प्रथमेऽष्टादशो वर्गः ॥

जीमूतस्येत्येकोनविंशत्यृचं चतुर्दशं सूक्तं भारद्वाजस्य पायोरार्षं । अनुक्रम्यते च । जीमूतस्यैकोना पायुर्भारद्वाजः संग्रामांगान्यृक्शोऽभितुष्टाव वर्म धनुर्ज्यामार्त्नी इषुधिं जगत्यर्द्धे सारथिमर्द्धे रश्मीनश्वान् रथं रथगोपान् जगत्यादि लिंगोक्तदेवता द्वाभ्यामिषूः प्रतोदं हस्तघ्नं द्वाभ्यामिषूः पराः पंक्त्यादयो लिंगोक्तदेवताः संग्रामाशिषोऽंत्याऽनुष्टुब्जीत आलाक्तेति च द्वे द्वे इति । रथे तिष्ठन् ब्राह्मणास इति षष्ठीदशम्यौ जगत्यावंत्या यो नः स्व इत्येषानुष्टुब्जीत आ जंघंत्यालाक्तावसृष्टा यो न स्व इति पंचानुष्टुभो यत्र बाणा इति पंक्तिः शिष्टास्त्रिष्टुभः । आद्यया वर्म स्तूयते द्वितीयया धनुस्तृतीयया ज्या चतुर्थ्यार्त्नी पंचम्येषुधिः । अतः पंचानां वर्माद्या देवताः । षष्ठ्याः पूर्वार्द्धेन सारथिः स्तूयते । अतः सोऽर्द्धस्तद्देवताकः ।

उत्तरार्धेन रश्मयः स्तूयंते। सप्तम्याश्चा अष्टम्या रथो नवम्या रथगोपाः। अत-स्तास्तद्देवताकाः। ब्राह्मणास इत्यस्यां ब्राह्मणपितृसोम्यद्यावापृथिवीपूषाणो लिंगोक्तदेवताः। एकादशीद्वादश्याविषुस्तुतिरूपत्वादिषुदेवताके। त्रयोदश्या प्रतोदः। चतुर्दश्या हस्तघ्नः। पंचदशीषोडश्याविषुदेवताके। सप्तदश्या युद्धभूमिब्रह्मणस्पत्यदितिरूपा लिंगोक्तदेवताः। अष्टादश्याः कवचसोमवरुणा देवताः। अंत्याया देवा ब्रह्म च देवताः॥ युद्धेऽनेन सूक्तेन राजानं संनाहयेत्। तथा चाश्वलायनः। संग्रामे समुपोढ्हे राजानं संनाहयेदा त्वाहार्षमंतरेधीति पश्चाद्रथस्यावस्थाय जीमूतस्येव भवति प्रतीकमिति कवचं प्रयच्छेत् उत्तरया धनुरुत्तरां वाचयेत्स्वयं चतुर्थीं जपेत्पंचम्येषुधिं प्रयच्छेदभिप्रवर्तमाने षष्ठी सप्तम्याश्वानष्टमीमिषूनवेक्षमाणं वाचयत्यहिरिव भोगैः पर्येति बाहुमिति तलं नह्यमानं। गृ० सू० ३.११.। इति। तथा चावसृष्टा परा पततेतीषून्विसर्जयेद्यत्र बाणाः संपतंति युध्यमानेषु जपेत्संशिष्याद्वा। गृ० सू० ३.११.। इति॥ अध्यायोपाकरणोत्सर्जनयोर्मंडलांत्यहोमे यो नः स्व इत्येषा। गृ० सू० ३.५.॥

॥ तत्र प्रथमा ॥

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे।
अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु॥१॥
जीमूतस्यऽइव। भवति। प्रतीकं। यत्। वर्मी। याति। सऽमदां। उपऽस्थे।
अनाविद्धया। तन्वा। जय। त्वं। सः। त्वा। वर्मणः। महिमा। पिपर्तु॥१॥

समदां संग्रामाणामुपस्थ उपस्थाने सति यद्यदायं राजा वर्मी कवची याति तदा लोहमयेन वर्मणा संनद्धस्य राज्ञः प्रतीकं रूपं जीमूतस्येव मेघस्येव भवति। मेघस्य यादृशं रूपं तादृशमस्य भवतीत्यर्थः। हे राजन् त्वमनाविद्धया शत्रुभिरबाधितया तन्वा शरीरेण शत्रून् जय। वर्मणः स तादृशो महिमा त्वा त्वां पिपर्तु। पालयतु॥

॥ अथ द्वितीया ॥

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम॥२॥

धन्वना। गाः। धन्वना। आजिं। जयेम। धन्वना। तीव्राः। सऽमदः। जयेम।
धनुः। शत्रोः। अपऽकामं। कृणोतु। धन्वना। सर्वाः। प्रऽदिशः। जयेम ॥२॥

धन्वना चापेन गाः शत्रूणां जयेम। वयं वशीकरवाम। धन्वनाजिं संग्रामं च जयेम। धन्वना तीव्रा उद्धताः समदोऽत्यंतं मदवतीः शत्रुसेनाश्च जयेम। तथा च यास्कः। समदः समदो वात्तेः संमदो वा मदतेः। नि॰ ९.१७.। इति। धनुः शत्रोरपकामं कामस्यापायं कृणोति। करोतु। किंच धन्वना वयं सर्वाः प्रदिशः सर्वासु दिक्षु वर्तमानान् शत्रून् जयेम। प्रदिक्शब्दो लक्षणया तत्स्थेषु पुरुषेषु वर्तते मंचाः क्रोशंतीतिवत्। धन्वन्शब्दस्य जयतेश्चावृत्तिरादरार्था ॥

॥ अथ तृतीया ॥

वक्ष्यंतीवेदा गनीगंति कर्णं प्रियं सखायं परिषस्वजाना।
योषेव शिंक्ते वितताधि धन्वन् ज्या इयं समने पारयंती ॥३॥

वक्ष्यंतीऽइव। इत्। आ। गनीगंति। कर्णं। प्रियं। सखायं। परिऽसस्वजाना।
योषाऽइव। शिंक्ते। विऽतता। अधि। धन्वन्। ज्या। इयं। समने। पारयंती ॥३॥

पूर्वेण ऋग्द्वयेन कवचधनुषी स्तुते। अत्र ज्यास्तुतिः। इयं ज्या समने संग्रामे धन्वन् धन्वनि। अधीति सप्तम्यर्थानुवादः। वितता विस्तृता पारयंती पारं नयंती प्रियं प्रियकरं वाक्यं वक्ष्यंतीव कर्णं धन्विनो राज्ञः कर्णप्रदेशमागनीगंति। आगच्छति। इदिति पूरणः। योषा नारी सखायं पतिमिव परिष्वस्वजानेषुं परिष्वजमाना शिंक्ते। शब्दायते च। तथा च यास्कः। वक्ष्यंतीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना योषेव शिंक्ते शब्दं करोति वितताधि धनुषि ज्येयं समने संग्रामे पारयंती पारं नयंती। नि॰ ९.१८.। इति ॥

॥ अथ चतुर्थी ॥

ते आचरंती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे।
अप शत्रून्विध्यतां संविदाने आर्त्नी इमे विष्फुरंती अमित्रान् ॥४॥

ते इति। आचरंती इत्याऽचरंती। समनाऽइव। योषा। माताऽइव। पुत्रं। बिभृतां। उपऽस्थे।
अप। शत्रून्। विध्यतां। संविदाने इति संऽविदाने। आर्त्नी इति। इमे इति। विस्फुरंती इति विऽस्फुरंती। अमित्रान् ॥४॥

अथ धनुःकोट्योः स्तुतिः । ते धनुःकोट्यौ समनेव समनस्केव योषा पति-समीपं न त्यजति तद्वदाचरंती अभितश्चरंत्यावुपस्थ उपस्थाने मातेव पुत्रं यथा माता पुत्रं धारयति तद्वद्बिभृतां । राजानं धारयेतां । किंचेमे धनुःकोट्यौ संविदाने संजानाने विसंवादरहिते आर्त्नी गच्छंत्यौ ॥ ऋ गताविति धातोर्धुर्यं-गिभ्यां निरिति बाहुलकात् निप्रत्ययो धातोरार्तभावश्च । ततः कृदिकारादक्तिन इति ङीष् । द्विवचनस्य पूर्वसवर्णः ॥ अस्य राज्ञोऽमित्रान् विष्फुरंती विहिंसंत्यौ शत्रूंश्चापविध्यतां । तथा च यास्कः । ते आचरंती समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थानेऽपविध्यतां शत्रून् संविदाने आर्त्न्याविमे विघ्नत्यावमि-त्रान् । नि॰ ९.३९. । इति ॥

॥ अथ पंचमी ॥

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य ।
इषुधिः संकाः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥५॥

बह्वीनां । पिता । बहुः । अस्य । पुत्रः । चिश्चा । कृणोति । समना । अवऽगत्य ।
इषुऽधिः । संकाः । पृतनाः । च । सर्वाः । पृष्ठे । निऽनद्धः । जयति । प्रऽसूतः ॥५॥

इषुधिरत्र स्तूयते । इषुधिर्बह्वीनामिषूणां पिता भवति । रक्षणहेतुत्वात्पितेत्युच्यते । इषुशब्दस्योभयलिंगत्वाद्बह्वीनामिति प्रयोगः । अस्येषुधेः पुत्र इषुर्बहुर्भ-वति । बहव इषवो हीषुधौ निधीयंते । इषूणां निधानत्वादिषुधिः । तथा च यास्कः । इषुधिरिषूणां निधानं । नि॰ ९.१३. । इति । चिश्चा कृणोति । चिश्चेति शब्दानुकृतिः । इषुषूद्ध्रियमाणेष्विषुधिश्चिश्चाशब्दं करोति । किंचेषुधिः पृष्ठे निनद्धो धन्विनो राज्ञः पृष्ठभागे बद्धः समना युद्धान्यवगत्य प्राप्य प्रसूतः प्रसुवन् ॥ कर्तरि निष्ठा ॥ इषून्प्रे-रयन् संकाः । सह कायंति शब्दायंत इति संकाः पृतनाः । सर्वाः सेना जयति ॥

॥ इति पंचमस्य प्रथम एकोनविंशो वर्गः ॥

॥ अथ षष्ठी ॥

रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छंति रश्मयः ॥६॥

रथे । तिष्ठन् । नयति । वाजिनः । पुरः । यत्रऽयत्र । कामयते । सुऽसारथिः ।
अभीशूनां । महिमानं । पनायत । मनः । पश्चात् । अनु । यच्छंति । रश्मयः ॥६॥

अत्र पूर्वार्धे सारथिस्तुतिरुत्तरार्धेऽभीशूनां स्तुतिः। सुषारथिः शोभनसारथी रथे तिष्ठन् पुरः पुरस्ताद्वर्तमानान्वाजिनोऽश्वान्यत्र यत्र नेतुं कामयते तत्र तत्र नयति। ये रथे रश्मयोऽश्वग्रीवाभ्यां व्याप्य वर्तमानाः पाशाः पश्चात् रथस्य पृष्ठभागे विद्यमाना अश्वान् मनः सारथेर्मनोऽनुकूलमनुयच्छंति। नियच्छंति। तेषामभीशूनां रश्मीनां महिमानं महत्त्वं पनायत। हे जनाः स्तुत। तथा च यास्कः। रथे तिष्ठन्नयति वाजिनः पुरस्तात्सतो यत्र यत्र कामयते सुषारथिः कल्याणसारथिरभीशूनां महिमानं पूजयत मनः पश्चात्सतोऽनुयच्छंति रश्मयः। नि० ९. १६.। इति ॥

॥ अथ सप्तमी ॥

तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयंतः।
अवक्रामंतः प्रपदैरमित्रान् क्षिणंति शत्रूँरनपव्ययंतः ॥७॥

तीव्रान्। घोषान्। कृण्वते। वृषऽपाणयः। अश्वाः। रथेभिः। सह। वाजयंतः।
अवऽक्रामंतः। प्रऽपदैः। अमित्रान्। क्षिणंति। शत्रून्। अनपऽव्ययंतः ॥७॥

अत्राश्वस्तुतिः। अश्वा वृषपाणयः पांसूनां वर्षकखुरा रथेभी रथैः सह वाजयंतो वेगमाचरंतस्तीव्रानुत्तरान्घोषान् शब्दान् कृण्वते। कुर्वते। किंचानपव्ययंतोऽपलायमाना अमित्रान् हिंसकान् शत्रून् प्रपदैः पादाग्रैरवक्रामंतः क्षिणंति। हिंसंति ॥

॥ अथाष्टमी ॥

रथवाहनं हविरस्य नाम यत्रायुधं निहितमस्य वर्म।
तत्रा रथमुप शग्मं सदेम विश्वाहा वयं सुमनस्यमानाः ॥८॥

रथऽवाहनं। हविः। अस्य। नाम। यत्र। आयुधं। निऽहितं। अस्य। वर्म।
तत्र। रथं। उप। शग्मं। सदेम। विश्वाहा। वयं। सुऽमनस्यमानाः ॥८॥

अस्य राज्ञो रथवाहनं शत्रून् जित्वा रथेनोह्यमानं धनं हविर्भवति। अग्नेर्हविरिव वर्धकं भवतीत्यर्थः। नामेति संमतिः। यत्र रथेऽस्य राज्ञ आयुधं धनुःशरादिकं वर्म कवचं च निहितं भवति तत्र तं॥ तत्रेत्यव्ययस्य सर्वविभक्तिकत्वात्॥ शग्मं सुखकरं विश्वाहा सर्वदा सुमनस्यमानाः सुखमनसो भवंतो वयं पायवो भरद्वाजा उपसदेम। उपगच्छेम ॥

॥ अथ नवमी ॥

स्वादुषंसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवंतो गभीराः ।
चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः ॥९॥

स्वादुऽसंसदः । पितरः । वयःऽधाः । कृच्छ्रेऽश्रितः । शक्तिऽवंतः । गभीराः ।
चित्रऽसेनाः । इषुऽबलाः । अमृध्राः । सतःऽवीराः । उरवः । व्रातऽसहाः ॥९॥

अथ रथगोपस्तुतिः । पितरो रथस्य पालयितारः स्वादुषंसदः शत्रूणां स्वादुन्यन्ने संसीदंतः शत्रूणामन्नमवसादयंतो वा वयोधा अन्नस्य दातारः कृच्छ्रेश्रित आपदि श्रयंतः शक्तीवंतः । शक्तिरायुधविशेषः । तद्वंतः । शक्तीवंतः शक्तीहस्ता इति यावत् । यद्वा शक्तिर्बलं । तद्वंतः । गभीरा अनाधृष्याश्चित्रसेना दर्शनीयसेना इषुबला बाणबला अमृध्रा हिंसितुमशक्याः सतोवीराः प्राप्तवीर्याः । तथा च यास्कः । तिरः सत इति प्राप्तस्य तिरस्तीर्णं भवति सतः संसृतं भवतीति । उरवो महांतो व्रतसाहाः समूहानामभिभवितारो भवंतीति ॥

॥ अथ दशमी ॥

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा ।
पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशंस ईशत ॥१०॥

ब्राह्मणासः । पितरः । सोम्यासः । शिवे इति । नः । द्यावापृथिवी इति । अनेहसा ।
पूषा । नः । पातु । दुःऽइतात् । ऋतऽवृधः । रक्ष । माकिः । नः । अघऽशंसः । ईशत ॥१०॥

ब्राह्मणासो हे ब्राह्मणाः पितर ऋतावृध ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितार सोम्याः सोमार्हाः सोमसंपादिनो वा । तथा च यास्कः । सोम्याः सोमसंपादिनः । नि० ११.१८. । इति । नोऽस्मान्रक्षत । रक्षेत्युपरितनमेकवचनांतं सत्यपि व्यवधाने बहुवचनांततया विपरिणतं सदत्र संबध्यतेऽध्याहारस्यातिजघन्यत्वात् । किंचानेहसापापे द्यावापृथिवी द्यावापृथिव्यौ नोऽस्माकं शिवे सुखकृतौ भवतां । पूषा पोषको देवोऽपि नोऽस्मान्दुरिताद्दुष्कृतात्पातु । रक्षतु । नोऽस्माकमघशंसः पापशंसः शत्रुरपि माकिरीशत । मेष्ट ॥

॥ इति पंचमस्य प्रथमे विंशो वर्गः ॥

॥ अथैकादशी ॥

सुपर्णं वस्ते मृगो अस्या दंतो गोभिः संनद्धा पतति प्रसूता ।
यत्रा नरः सं च वि च द्रवंति तत्रास्मभ्यमिषवः शर्म यंसन् ॥११॥
सुऽपर्णं । वस्ते । मृगः । अस्याः । दंतः । गोभिः । संऽनद्धा । पतति । प्रऽसूता ।
यत्र । नरः । सं । च । वि । च । द्रवंति । तत्र । अस्मभ्यं । इषवः । शर्म । यंसन् ॥११॥

अस्यामृचीषवः स्तूयंते । सुपर्णं शोभनं वाजं वस्ते । इयमिषुर्धारयति । अस्या इषोर्मृगो मृगावयवः शृंगं दंतो भवति । इषवः काश्चिद्दंतमुखा भवंति हि । अथवास्या दंतो मृगः शत्रून्मृगयमाणो भवति । किंच गोभिर्गोविकारैः स्नायुभिः संनद्धा सम्यग्बद्धा । अथवा गौरिति ज्यानाम । तया संबद्धा । अत्र वचनव्यत्ययः । तथा च निगमः । वृक्षे वृक्षे नियता मीमयद्गौः । ऋग्वे० १०.२७.२२. । इति । अस्यायमर्थः । वृक्षे वृक्षे धनुषि धनुषि गौर्ज्या नियता मीमयत् शब्दं करोतीति । तथा च यास्कः । वृक्षे वृक्षे धनुषि धनुषि । वृक्षो व्रश्चनाद्वृत्वा क्षां तिष्ठतीति वा । क्षा क्षियतेर्निवासकर्मणः । नियता मीमयद्गौः शब्दं करोति । मीमयतिः शब्दकर्मा । नि० २.६. । इति । प्रसूता प्रेरिता सती पतति । यत्र युद्धे नरः सं च सह च वि च पृथक्च द्रवंति चरंति तत्रास्मभ्यमिषवः शराः शर्म सुखं यंसन् । प्रयच्छंतु । तथा च यास्कः । सुपर्णं वस्त इति वाजानभिप्रेत्य मृगमयोऽस्या दंतो मृगयतेर्वा गोभिः संनद्धा पतति प्रसूतेति व्याख्यातं । यत्र नराः संद्रवंति च विद्रवंति च तत्रास्मभ्यमिषवः शर्म शरणं प्रयच्छंतु । नि० ९.१९. । इति ॥

॥ अथ द्वादशी ॥

ऋजीते परि वृंधि नोऽश्मा भवतु नस्तनूः ।
सोमो अधि ब्रवीतु नोऽदितिः शर्म यच्छतु ॥१२॥
ऋजीते । परि । वृंधि । नः । अश्मा । भवतु । नः । तनूः ।
सोमः । अधि । ब्रवीतु । नः । अदितिः । शर्म । यच्छतु ॥१२॥

ऋजीते । ऋजु गच्छतीत्यृजीतिरिषुः । हे इषो नोऽस्मान्परिवृंधि । परितो वर्धय । नोऽस्माकं तनूः शरीरमश्मा भवतु । अश्मवदभेद्या दृढा भवतु । किंच नोऽस्मभ्यं सोमोऽधिब्रवीतु । पक्षपातेन ब्रवीतु । अदितिरपि शर्म सुखं यच्छतु ॥

॥ अथ त्रयोदशी ॥

आ जंघंति सान्वेषां जघनाँ उप जिघ्नते ।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥ १३ ॥
आ । जंघंति । सानुं । एषां । जघनान् । उप । जिघ्नते ।
अश्वऽअजनि । प्रऽचेतसः । अश्वान् । समत्ऽसु । चोदय ॥ १३ ॥

अश्वाजन्यश्वानां क्षेप्त्रि कशे यया त्वया प्रचेतसः प्रकृष्टज्ञानाः सादिनः सारथयो वैषामश्वानां सानु सानूनि सक्थीन्याजंघंति आघ्नंति । जघनान् जघनान्युपजिघ्नते उपजिघ्नति सा त्वं समत्सु संग्रामेष्वश्वान् चोदय । प्रेरय । तथा च यास्कः । आघ्नंति सानून्येषां सरणानि सक्थीनि । सक्थि सचतेरासक्तोऽस्मिन् कायः । जघनानि चोपघ्नंति । जघनं जंघन्यतेः । अश्वाजनि प्रचेतसः प्रवृद्धचेतसोऽश्वान् समत्सु समरणेषु संग्रामेषु चोदय । नि० ९. २०. । इति ॥

॥ अथ चतुर्दशी ॥

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः ॥ १४ ॥
अहिःऽइव । भोगैः । परि । एति । बाहुं । ज्यायाः । हेतिं । परिऽबाधमानः ।
हस्तऽघ्नः । विश्वा । वयुनानि । विद्वान् । पुमान् । पुमांसं । परि । पातु । विश्वतः ॥ १४ ॥

अथ धन्विनः प्रकोष्ठे बंधनीयस्य हस्तघ्नस्य स्तुतिः । हस्तघ्नः । हस्ते हस्तसमीपे वर्तिनि प्रकोष्ठे स्थितः सन् ज्यया हन्यत इति हस्तघ्नः ॥ घजर्थे कविधानमिति कः ॥ ज्याया हेतिं ज्याहेतुकां हिंसां परिबाधमानो निवारयन् भोगैः शरीरैः । वचनव्यत्ययः । अहिरिव सर्प इव बाहुं प्रकोष्ठं । लक्षणया बाहुशब्दः प्रकोष्ठे वर्तते । पर्येति । परिवेष्टयति । किंच विश्वा विश्वानि वयुनानि ज्ञानानि ज्ञातव्यानि ॥ माया वयुनमिति तन्नामसु पाठात् ॥ विद्वान् जानन् पुमान्पौरुषोपेतः स्वयं पुमांसं धन्विनं विश्वतः सर्वतः परिपातु । रक्षति । तथा च यास्कः । अहिरिव भोगैः परिवेष्टयति बाहुं ज्याया वधात्परित्रायमाणो हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् पुमान्पुरुमना भवति पुंसतेर्वा । नि० ९. १५. । इति ॥

॥ अथ पंचदशी ॥

आलाक्ता या रुरुशीर्ष्ण्यथो यस्या अयो मुखं ।
इदं पर्जन्यरेतस इष्वै देव्यै बृहन्नमः ॥१५॥
आलऽअक्ता । या । रुरुऽशीर्ष्णी । अथो इति । यस्याः । अयः । मुखं ।
इदं । पर्जन्यऽरेतसे । इष्वै । देव्यै । बृहत् । नमः ॥१५॥

येषुरालाक्तालेन विषेणाक्ता रुरुशीर्ष्णी हंतृशिरस्का ॥ अर्तेर्हिंसाकर्मणो रुरुशब्दोत्पत्तिः ॥ मृगशीर्ष्णी वा । अथो किंच यस्या इषोर्मुखमयोऽयोमयं भवति पर्जन्यरेतसे । पर्जन्यो रेतो यस्याः सा पर्जन्यरेताः । तस्यै पर्जन्यकार्यभूतायै । शरकांडस्य पर्जन्यजन्यत्वात् । बृहत् बृहत्यै तस्यै देव्या इष्वा इदं नमः क्रियत इति ॥

॥ इति पंचमस्य प्रथम एकविंशो वर्गः ॥

॥ अथ षोडशी ॥

अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते ।
गच्छामित्रान्प्र पद्यस्व मामीषां कं चनोच्छिषः ॥१६॥
अवऽसृष्टा । परा । पत । शरव्ये । ब्रह्मऽसंशिते ।
गच्छ । अमित्रान् । प्र । पद्यस्व । मा । अमीषां । कं । चन । उत् । शिषः ॥१६॥

ब्रह्मसंशिते मंत्रेण तीक्ष्णीकृते शरव्ये हिंसाकुशल इषो त्वमवसृष्टा क्षिप्ता परापत । परागच्छ । इतो देशाद्गच्छ च । अमित्रान्हिंसकान्प्रपद्यस्व । प्राप्नुहि च । अमीषाममित्राणां मध्ये कं चन कंचिदपि मोच्छिषः । अवशिष्टं मा कुरु ॥

॥ अथ सप्तदशी ॥

यत्र बाणाः संपतंति कुमारा विशिखा इव ।
तत्रा नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥१७॥
यत्र । बाणाः । संऽपतंति । कुमाराः । विशिखाःऽइव ।
तत्र । नः । ब्रह्मणः । पतिः । अदितिः । शर्म । यच्छतु । विश्वाहा । शर्म । यच्छतु ॥१७॥

यत्र युद्धे कुमारा विशिखा इव मुंडिता इव बाणाः संपतंति तत्र नोऽस्मभ्यं ब्रह्मणस्पतिः शर्म सुखं विश्वाहा सर्वदा यच्छतु । अदितिश्च शर्म यच्छतु । द्विरुक्तिरादरार्था ॥

॥ अथाष्टादशी ॥

मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्तां ।

उरोर्वरीयो वरुणस्ते कृणोतु जयंतं त्वानु देवा मदंतु ॥१८॥

मर्माणि । ते । वर्मणा । छादयामि । सोमः । त्वा । राजा । अमृतेन । अनु । वस्तां ।

उरोः । वरीयः । वरुणः । ते । कृणोतु । जयंतं । त्वा । अनु । देवाः । मदंतु ॥१८॥

हे राजन् ते त्वदीयानि मर्माणि । येषु स्थानेषु विद्धः सद्यो म्रियते तानि मर्माणि । वर्मणा कवचेन छादयामि । सोमो राजा त्वा त्वामनु मर्मच्छादनानंतरममृतेन वस्तां । आच्छादयतु । किंच वरुणोऽपि ते तुभ्यमुरोर्वरीय उरुतरं सुखं कृणोतु । करोतु । जयंतं त्वा त्वां देवाः सर्वेऽप्यनुमदंतु । अनुहृष्यंतु ॥

॥ अथैकोनविंशी ॥

यो नः स्वो अरणो यश्च निष्ट्यो जिघांसति ।

देवास्तं सर्वे धूर्वंतु ब्रह्म वर्म ममांतरं ॥१९॥

यः । नः । स्वः । अरणः । यः । च । निष्ट्यः । जिघांसति ।

देवाः । तं । सर्वे । धूर्वंतु । ब्रह्म । वर्म । मम । अंतरं ॥१९॥

यः स्वो ज्ञातिररणोऽरममाणो यश्च निष्ट्यस्तिरोभूतो दूरे स्थितो नोऽस्मान् जिघांसति हंतुमिच्छति तं देवाः सर्वे देवा धूर्वंतु । हिंसंतु । ब्रह्म मंत्रो ममांतरं शराणां निवारकं वर्म विद्यते ॥

॥ इति पंचमस्य प्रथमे द्वाविंशो वर्गः ॥

॥ इति सायणाचार्यविरचिते दाशतय्याः षष्ठे मंडले षष्ठोऽनुवाकः समाप्तं मंडलं च ॥

---

## ॥ अथ सप्तमं मंडलं ॥

अथ सप्तमं मंडलमारभ्यते । तस्मिन्मंडले षडनुवाकाः । प्रथमेऽनुवाके सप्तदश सूक्तानि । तत्राग्निं नर इति पंचविंशत्यृचं प्रथमं सूक्तं । अत्रेयमनुक्रमणिका । अग्निं पंचाधिका विराजोऽष्टादशाद्या इति । सप्तमं मंडलं वसिष्ठोऽपश्यदित्युक्तत्वान्मंडलद्रष्टा वसिष्ठ ऋषिः । आदितोऽष्टादश विराजस्त्र्येकादशकाः शिष्टा अनादेशपरिभाषया त्रिष्टुभः । मंडलादिपरिभाषयाग्निर्देवता ॥ विश्वजितीदं सूक्तमाज्यशस्त्रं । सूचितं च । विश्वजितोऽग्निं नर इत्याज्यं । आ° ८.७. । इति ॥ अत्रैश्चतुर्वीराख्ये चतूरात्रे चतुर्थेऽहनीदमेव सूक्तमाज्यशस्त्रं । सूत्र्यते हि । अग्निं नर इति चतुर्थे । आ° १०.२. । इति ॥ व्यूळ्हे दशरात्रे चतुर्थेऽहनीदं सूक्तं जातवेदस्यनिविद्धानं । सूचितं च । अग्निं नर इत्याग्निमारुतं । आ° ८.८. । इति ॥ महाव्रतेऽपीदमाज्यशस्त्रं । तथैव पंचमारण्यके सूत्र्यते । आज्यप्रउगे विश्वजितः । ऐ° आ° ५.१. । इति ॥ प्रातरनुवाके त्वमग्ने वसूनित्यादीनामनुष्टुभां स्थान आद्यस्तृचः प्रक्षेपणीयः । सूत्र्यते हि । दशमेऽहन्यनुष्टुभां स्थानेऽग्निं नरो दीधितिभिररण्योरिति तृचमाग्नेये क्रतौ । आ° ८.१२. । इति ॥ आद्याः षडृचस्तस्मिन्नेवाहन्याग्निमारुते शस्त्रे स्तोत्रियानुरूपार्थाः । सूचितं च । अग्निं नरो दीधितिभिररण्योरिति स्तोत्रियानुरूपौ । आ° ८.१२. । इति ॥ मंडलादिहोमेऽप्येषा ॥ आधाने तृतीयायामिष्टौ प्रेद्ध इति स्विष्टकृतोऽनुवाक्या ॥ सूचितं च । प्रेद्धो अग्न इमो अग्न इति संयाज्ये । आ° २.१. । इति ॥ एवमन्यत्रापि दीक्षणीयादिषु स्विष्टकृतोऽनुवाक्या । प्रायणीयेष्टौ सेदग्निरग्नीनित्यादिके द्वे स्विष्टकृतो यज्यानुवाक्ये । सूचितं च । सेदग्निरग्नीरत्यस्त्वन्यानिति द्वे संयाज्ये । आ° ४.३. । इति ॥ आधाने तृतीयायामिष्टाविमो अग्न इति स्विष्टकृतो याज्या । सूचितं च । इमो अग्न इति संयाज्ये । आ° २.१. । इति ॥ एवमन्यत्रापि दीक्षणीयादिष्वेषा सौविष्टकृती याज्या ॥ प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे च त्वमग्ने सुहव इत्याद्याः पंचर्चः । सूचितं च । त्वमग्ने सुहवो रण्वसंदृक् । आ° ४.१३. । इति ॥

॥ तत्र प्रथमा ॥

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयंत प्रशस्तं ।
दूरेदृशं गृहपतिमथर्युं ॥१॥
अग्निं । नरः । दीधितिऽभिः । अरण्योः । हस्तऽच्युती । जनयंत । प्रऽशस्तं ।
दूरेऽदृशं । गृहऽपतिं । अथर्युं ॥१॥

नरो नेतार ऋत्विजः प्रशस्तं प्रकर्षेण स्तुतं दूरेदृशं दूरे दृश्यमानं दूरे पश्यंतं वा गृहपतिं गृहाणां पालकमथर्युमागम्यमतनवंतं वाग्निमरण्योर्विद्यमानं हस्तच्युती हस्तप्रच्युत्या हस्तगत्या दीधितिभिरंगुलिभिर्जनयंत । दीधितयोऽंगुलयो भवंति धीयंते कर्मसु । अरणी प्रत्यृत एने अग्निः समरणाज्जायत इति वा । हस्तच्युती हस्तप्रच्युत्याजनयंत प्रशस्तं दूरेदर्शनं गृहपतिमतनवंतं । नि० ५.१०. । इति ॥

॥ अथ द्वितीया ॥

तमग्निमस्ते वसवो न्यृण्वन्सुप्रतिचक्षमवसे कुतश्चित् ।
दक्षाय्यो यो दम आस नित्यः ॥२॥
तं । अग्निं । अस्ते । वसवः । नि । ऋण्वन् । सुऽप्रतिचक्षं । अवसे । कुतः । चित् ।
दक्षाय्यः । यः । दमे । आस । नित्यः ॥२॥

योऽग्निर्दमे गृहे दक्षाय्यः पूजनीयो हविर्भिः समर्धनीयो वा नित्योऽजस्र आस बभूव तं सुप्रतिचक्षं सुप्रतिदर्शनमग्निं कुतश्चित् सर्वस्मादपि भयहेतोरवसे रक्षणाय वसवो वासका ये वसिष्ठा अस्ते गृहे न्यृण्वन् । न्यदधुः ॥

॥ अथ तृतीया ॥

प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
त्वां शश्वंत उप यंति वाजाः ॥३॥
प्रऽइद्धः । अग्ने । दीदिहि । पुरः । नः । अजस्रया । सूर्म्या । यविष्ठ ।
त्वां । शश्वंतः । उप । यंति । वाजाः ॥३॥

यविष्ठ युवतम हे अग्ने प्रेद्धः प्रकर्षेण समिद्धस्त्वमजस्रया सरणशीलया सूर्म्या

आलया नोऽस्मदर्थं पुरः पुरस्तादाहवनीयायतने दीदिहि। दीप्यस्व। त्वां शश्वंतो बह्वो वाजा अन्नानि हवींष्युपयंति। उपगच्छंति ॥

॥ अथ चतुर्थी ॥

प्र ते अग्नयोऽग्निभ्यो वरं निः सुवीरासः शोशुचंत द्युमंतः।
यत्रा नरः समासते सुजाताः ॥४॥
प्र। ते। अग्नयः। अग्निऽभ्यः। वरं। निः। सुऽवीरासः। शोशुचंत। द्युऽमंतः।
यत्र। नरः। संऽआसते। सुऽजाताः ॥४॥

अग्निभ्यो लौकिकेभ्योऽग्निभ्यो वरमत्यंतं द्युमंतो दीप्तिमंतः सुवीरासः कल्याणपुत्रपौत्रप्रदास्तेऽग्नयो प्र निः शोशुचंत। प्रकर्षेण नितरां दीप्यंते। यत्र येष्वग्निषु सुजाताः सुजन्मानो नरः कर्मणां नेतारो यजमाना ऋत्विजो वा समासते सहासते॥

॥ अथ पंचमी ॥

दा नो अग्ने धिया रयिं सुवीरं स्वपत्यं सहस्य प्रशस्तं।
न यं यावा तरति यातुमावान् ॥५॥
दाः। नः। अग्ने। धिया। रयिं। सुऽवीरं। सुऽअपत्यं। सहस्य। प्रऽशस्तं।
न। यं। यावा। तरति। यातुऽमावान् ॥५॥

सहस्याभिभवकुशल हे अग्ने सुवीरं शोभनपुत्रपौत्रोपेतं स्वपत्यं शोभनपौत्रोपेतं प्रशस्तं श्रेष्ठं रयिं धनं धिया स्तोत्रेण नोऽस्मभ्यं दाः। देहि। यं रयिं यावाभिगंता शत्रुर्यातुमावान् हिंसाया निर्गतः॥ नलोपाभावश्छांदसः॥ यद्वा हिंसायुक्तः॥ परो वतिर्मत्वर्थीयः पूरकः॥ न तरति न बाधते॥

॥ इति पंचमस्य प्रथमे त्रयोविंशो वर्गः॥

॥ अथ षष्ठी ॥

उप यमेति युवतिः सुदक्षं दोषा वस्तोर्हविष्मती घृताची।
उप स्वैनमरमतिर्वसूयुः ॥६॥
उप। यं। एति। युवतिः। सुऽदक्षं। दोषा। वस्तोः। हविष्मती। घृताची।
उप। स्वा। एनं। अरमतिः। वसुऽयुः ॥६॥

सुदक्षं सुबलं यमग्निं हविष्मती हविषा युक्ता घृताची। घृतमंचतीति घृताची जुहूः। युवतिरग्निना नित्ययुक्ता दोषा वस्तो रात्रावहनि चोपैति उपगच्छति तमेनं स्वा स्वकीयारमतिर्दीप्तिर्वसूयुः स्तोतॄणां धनमिच्छंत्युपैति ॥

॥ अथ सप्तमी ॥

विश्वा अग्नेऽप दहारातीर्येभिस्तपोभिरदहो जरूथं।

प्र निस्वरं चातयस्वामीवां ॥७॥

विश्वाः। अग्ने। अप। दह। अरातीः। येभिः। तपःऽभिः। अदहः। जरूथं।

प्र। निऽस्वरं। चातयस्व। अमीवां ॥७॥

हे अग्ने विश्वा विश्वानरातीः शत्रून् तपोभिस्तेजोभिरपदह। येभिर्यैस्तपोभिर्जरूथं परुषशब्दकारिणं राक्षसं॥ गृणातेरूथन्प्रत्यये सति जरूथशब्दनिष्पत्तिः॥ अदहः दहसि। किंचामीवां रोगं निस्वरं न्यक्कृतोपतापं यथा भवति तथा॥ स्वृ शब्दोपतापयोरिति धातुः॥ प्र चातयस्व। प्रकर्षेण नाशय॥ चततिर्गत्यर्थो वेति भट्टभास्करमिश्रः॥

॥ अथाष्टमी ॥

आ यस्ते अग्न इधते अनीकं वसिष्ठ शुक्र दीदिवः पावक।

उतो न एभिः स्तवथैरिह स्याः ॥८॥

आ। यः। ते। अग्ने। इधते। अनीकं। वसिष्ठ। शुक्र। दीदिऽवः। पावक।

उतो इति। नः। एभिः। स्तवथैः। इह। स्याः ॥८॥

वसिष्ठ श्रेष्ठ शुक्र शुभ्र दीदिवो दीप्त पावक शोधक हे अग्ने ते तवानीकं तेजो य एधते समेधयति तस्येव नोऽस्माकमुतो अपि चैभिः स्तवथैः स्तोत्रैरिहास्मिन्यज्ञे स्याः। भव ॥

॥ अथ नवमी ॥

वि ये ते अग्ने भेजिरे अनीकं मर्ता नरः पित्र्यासः पुरुत्रा।

उतो न एभिः सुमना इह स्याः ॥९॥

वि। ये। ते। अग्ने। भेजिरे। अनीकं। मर्ताः। नरः। पित्र्यासः। पुरुऽत्रा।

उतो इति। नः। एभिः। सुऽमनाः। इह। स्याः ॥९॥

हे अग्ने ते तवानीकं तेजः पित्र्यासः पितृहिता आर्षेया वा मर्ता मनुष्या नरः कर्मणां नेतारो ये यजमानाः पुरुत्रा बहुषु देशेषु विभेजिरे विभजंते । आदधुरिति यावत् । तेषामिव नोऽस्माकमुतो अग्येभिः स्तुतैः सह स्तोत्रैर्वा सुमना अनुग्राहकमनाः सन् इह यज्ञे स्याः । भव ॥

॥ अथ दशमी ॥

इमे नरो वृत्रहत्येषु शूरा विश्वा अदेवीरभि संतु मायाः ।

ये मे धियं पनयंत प्रशस्तां ॥१०॥

इमे । नरः । वृत्रऽहत्येषु । शूराः । विश्वाः । अदेवीः । अभि । संतु । मायाः ।

ये । मे । धियं । पनयंत । प्रऽशस्तां ॥१०॥

ये मनुष्या मे मदीयां प्रशस्तां प्रकृष्टां धियं कर्म स्तुतिं वा पनयंत स्तुवंति ब्रुवंति वा त इमे मयि स्निग्धा नरो मनुष्या वृत्रहत्येषु संग्रामेषु शूरा अदेवीरासुरीर्विश्वाः सर्वा माया अभिसंतु । अभिभवंतु ॥

॥ इति पंचमस्य प्रथमे चतुर्विंशो वर्गः ॥

॥ अथैकादशी ॥

मा शूने अग्ने नि षदाम नृणां माशेषसोऽवीरता परि त्वा ।

प्रजावतीषु दुर्यासु दुर्य ॥११॥

मा । शूने । अग्ने । नि । सदाम । नृणां । मा । अशेषसः । अवीरता । परि । त्वा ।

प्रजाऽवतीषु । दुर्यासु । दुर्य ॥११॥

हे अग्ने शूने शून्ये पुत्रादिरहिते गृहे मा निषदाम । न निवसाम । नृणामन्येषां च गृहे मा निषदाम । दुर्य गृहेभ्यो हित हे अग्ने अशेषसोऽपुत्राः । तोक्म शेष इति पुत्रनामसु पाठात् । अवीरतावीरतया युक्ताश्च संतस्त्वा त्वां परिचरंतः प्रजावतीष्वेव दुर्यासु गृहेषु निवसाम ॥

॥ अथ द्वादशी ॥

यमश्वी नित्यमुपयाति यज्ञं प्रजावंतं स्वपत्यं क्षयं नः ।

स्वजन्मना शेषसा वावृधानं ॥१२॥

यं । अग्नी । नित्यं । उपऽयाति । यज्ञं । प्रजाऽवंतं । सुऽअपत्यं । क्षयं । नः ।
स्वऽजन्मना । शेषसा । ववृधानं ॥१२॥

यं यज्ञं यज्ञाश्रयमन्नमन्नवानग्निर्नित्यमुपयाति तं प्रजावंतं भृत्यादिसहितं स्वपत्यं शोभनसंतानोपेतं स्वजन्मनौरसेन शेषसा पुत्रेण ववृधानं वर्धमानं क्षयं गृहं नोऽस्मभ्यं हे अग्ने देहीति शेषः ॥

॥ अथ त्रयोदशी ॥

पाहि नो अग्ने रक्षसो अजुष्टात्पाहि धूर्तेरररुषो अघायोः ।
त्वा युजा पृतनायूँरभि ष्यां ॥१३॥
पाहि । नः । अग्ने । रक्षसः । अजुष्टात् । पाहि । धूर्तेः । अररुषः । अघऽयोः ।
त्वा । युजा । पृतनाऽयून् । अभि । स्यां ॥१३॥

हे अग्ने नोऽस्मानजुष्टादप्रीतिविषयाद्रक्षसो राक्षसात्पाहि । रक्ष । किंचाररुषोऽदातुरघायोः पापमिच्छतो धूर्तेर्हिंसकात्पाहि । अपि च त्वा त्वया युजा सहायभूतेन पृतनायून् पृतनाकामानभिष्यां । अहमभिभवेयं ॥

॥ अथ चतुर्दशी ॥

सेदग्निरग्नीँरत्यस्त्वन्यान्यत्र वाजी तनयो वीळुपाणिः ।
सहस्रपाथा अक्षरा समेति ॥१४॥
सः । इत् । अग्निः । अग्नीन् । अति । अस्तु । अन्यान् । यत्र । वाजी । तनयः । वीळुऽपाणिः ।
सहस्रऽपाथाः । अक्षरा । संऽएति ॥१४॥

स इत् स एवाग्निराहवनीयादिरस्मदीयोऽन्यानितरानन्यदीयानग्नीनत्यस्तु । अतिभवतु । यत्र यस्मिन्नग्नौ वाज्यशनवान् बलवान्वा वीळुपाणिर्दृढहस्तः । वीळु च्यौत्नमिति बलनामसु पाठात् । सहस्रपाथा बह्वन्नो बहुस्थानो वा बहूदको वा तनयोऽस्मत्पुत्रोऽक्षराक्षरेण क्षयरहितेन स्तोत्रेण समेति सम्यक् परिचरन्नेति । समर्थपुत्रवत एवाग्निरन्यदीयानग्नीनभिभवतीति भावः ॥

॥ पंचदशी ॥

सेदग्निर्यो वनुष्यतो निपाति समेद्धारमंहस उरुष्यात्।
सुजातासः परि चरंति वीराः ॥१५॥
सः। इत्। अग्निः। यः। वनुष्यतः। निऽपाति। संऽएद्धारं। अंहसः। उरुष्यात्।
सुऽजातासः। परि। चरंति। वीराः ॥१५॥

यः समेद्धारं प्रबोधकं वनुष्यतो हिंसकात्। वनुष्यतिर्हंतिकर्मेति यास्कः। उरुष्यात् अधिकादंहसः पापाच्च निपाति अत्यंतं रक्षति। यं च सुजातासः सुजन्मान एव वीराः स्तोतारः सुता वा परिचरंति स इत् स एवाग्निः ॥

॥ इति पंचमस्य प्रथमे पंचविंशो वर्गः ॥

॥ अथ षोडशी ॥

अयं सो अग्निराहुतः पुरुत्रा यमीशानः समिदिंधे हविष्मान्।
परि यमेत्यध्वरेषु होता ॥१६॥
अयं। सः। अग्निः। आऽहुतः। पुरुऽत्रा। यं। ईशानः। सं। इत्। इंधे। हविष्मान्।
परि। यं। एति। अध्वरेषु। होता ॥१६॥

यमग्निमीशानः समृद्ध ऐश्वर्यमिच्छन् वा हविष्मान् यजमानः समिंधे सम्यक् दीपयति। यं चाध्वरेषु हिंसारहितेषु यज्ञेषु होता देवानामाह्वाता पर्येति परिगच्छति सोऽयमग्निः पुरुत्रा बहुषु देशेषु बहुषु यज्ञेषु वाहुत आहुतिभिरभिहुतः॥

॥ अथ सप्तदशी ॥

त्वे अग्न आहवनानि भूरीशानास आ जुहुयाम नित्या।
उभा कृण्वंतो वहतू मियेधे ॥१७॥
त्वे इति। अग्ने। आऽहवनानि। भूरि। ईशानासः। आ। जुहुयाम। नित्या।
उभा। कृण्वंतः। वहतू इति। मियेधे ॥१७॥

हे अग्ने त्वे त्वयीशानासो धनानामीश्वराः संतो नित्या नित्यान्यग्निहोत्रादीन्युभौ वहतू वहनहेतू स्तोत्रं शस्त्रं च कृण्वंतः कुर्वंतो मियेधे यज्ञे भूरि बहून्याहवनानि हवींष्याजुहुयाम। आजुहवाम ॥

॥ अथाष्टादशी ॥

इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ ।
प्रति न ईं सुरभीणि व्यंतु ॥१८॥
इमो इति । अग्ने । वीतऽतमानि । हव्या । अजस्रः । वक्षि । देवऽतातिं । अच्छ ।
प्रति । नः । ईं । सुरभीणि । व्यंतु ॥१८॥

हे अग्ने त्वमजस्रोऽनवरतः सन् इमो इमानि वीततमान्यतिशयेन कांतानि हव्या हव्यानि देवतातिं देवानां समूहमभि वक्षि । वह । अच्छ गच्छ च । नोऽस्मदीयानि सुरभीणि शोभनानीमेतानि हव्यानि देवाः प्रति व्यंतु । प्रत्येकं कामयंतां ॥

॥ अथैकविंशी ॥

मा नो अग्नेऽवीरते परा दा दुर्वाससेऽमतये मा नो अस्यै ।
मा नः क्षुधे मा रक्षस ऋतावो मा नो दमे मा वन आ जुहूर्थाः ॥१९॥
मा । नः । अग्ने । अवीरते । परा । दाः । दुःऽवाससे । अमतये । मा । नः । अस्यै ।
मा । नः । क्षुधे । मा । रक्षसे । ऋतऽवः । मा । नः । दमे । मा । वने । आ । जुहूर्थाः ॥१९॥

हे अग्ने नोऽस्मानवीरतेऽपुत्रतायै मा परादाः । मा देहि । दुर्वाससे दुष्टवस्त्राय च नो मा परादाः । अस्या अमतयेऽभिहान्यै नोऽस्मान्मा परादाः । क्षुधेऽशनायायै नोऽस्मान्मा च परादाः । रक्षसे बलिने चास्मान्मा परादाः । हे ऋतावः सत्यवन्नग्ने नोऽस्मान् दमे गृहे मा जुहूर्थाः । मा हिंसीः ॥ हुर्छा कौटिल्ये इति धातुः ॥ वने चास्मान्मा जुहूर्थाः ॥

॥ अथ विंशी ॥

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।
रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥२०॥
नु । मे । ब्रह्माणि । अग्ने । उत् । शशाधि । त्वं । देव । मघवत्ऽभ्यः । सुसूदः ।
रातौ । स्याम । उभयासः । आ । ते । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥२०॥

हे अग्ने मे मम मदर्थं ब्रह्माण्यन्नानि नु क्षिप्रमुच्छशाधि । उत्कर्षेण शोधितानि

कुरु। किंच हे देव द्योतमानाग्ने मघवद्भ्यो हविष्मद्भ्योऽस्मभ्यं सुषूदः। अन्नानि प्रेरय। ते त्वदीयायां रातौ दाने उभयासः स्तोत्रिणः शस्त्रिणश्च अथवा स्तुवंतो यजमानाश्च वयमा स्याम। अत्यर्थं भवेम। नोऽस्मान्यूयं त्वं त्वत्परिवाराश्च सर्वे स्वस्तिभिरविनाशिभिर्मंगलैः। तथा च यास्कः। स्वस्तीत्यविनाशनामास्तिरभिपूजितः स्वस्तीति। सदा पात। रक्षत ॥

॥ इति पंचमस्य प्रथमे षड्विंशो वर्गः ॥

॥ अथैकविंशी ॥

त्वम॑ग्ने सु॒हवो॑ र॒ण्वसं॑दृक्सु॒दी॒ती सू॑नो सहसो दिदीहि।
मा त्वे सचा॒ तन॑ये॒ नित्य॒ आ ध॒ङ्मा वी॒रो अ॒स्मन्नर्यो॒ वि दा॑सीत् ॥२१॥

त्वं। अ॒ग्ने॒। सु॒ऽहवः॑। र॒ण्वऽसं॑दृक्। सु॒ऽदी॒ती। सू॒नो॒ इति॑। स॒ह॒सः॒। दि॒दी॒हि॒।
मा। त्वे इति॑। सचा॑। तन॑ये। नित्ये॑। आ। ध॒क्। मा। वी॒रः। अ॒स्मत्। नर्यः॑।
वि। दा॒सी॒त् ॥२१॥

सहसः सूनो सहसः सुत हे अग्ने सुहवः स्वाह्वानो रण्वसंदृक् रमणीयसंदर्शनस्त्वं सुदीती शोभनया दीप्त्या दिदीहि। दीप्यस्व। किंच तनये नित्य औरसे पुत्रे त्वे त्वं सचा सहायभूतो माधक्। माभिधाक्षीः। अपि चास्मत् पृथग्भूतोऽस्माकं वा ॥ षष्ठ्यर्थे पंचमी ॥ वीरः पुत्रो नर्यो नरहितो मा विदासीत्। मोपक्षीयत ॥

॥ अथ द्वाविंशी ॥

मा नो॑ अग्ने दुर्भृ॒तये॒ सचै॒षु दे॒वेद्धे॑ष्व॒ग्निषु॒ प्र वो॑चः।
मा ते॑ अ॒स्मान्दु॑र्म॒तयो॑ भृ॒माच्चि॑द्दे॒वस्य॑ सूनो सहसो नशंत ॥२२॥

मा। नः॒। अ॒ग्ने॒। दुः॒ऽभृ॒तये॑। सचा॑। ए॒षु। दे॒वऽइ॑द्धेषु। अ॒ग्निषु॑। प्र। वो॒चः॒।
मा। ते॒। अ॒स्मान्। दुः॒ऽम॒तयः॑। भृ॒मात्। चि॒त्। दे॒वस्य॑। सू॒नो॒ इति॑। स॒ह॒सः॒। न॒शं॒त॒ ॥२२॥

हे अग्ने सचा सहायभूतस्त्वं देवेद्धेष्वृत्विग्भिः समिद्धेष्वेष्वग्निषु दुर्भृतये कृच्छ्रभरणाय नोऽस्मान्मा प्रवोचः। न ब्रूहि। त्वत्सहायभूता अग्नयो यथा मामकृच्छ्रेण बिभृयुस्तथा ब्रूहीत्यर्थः। किंच सहसः सूनो हे बलस्य पुत्राग्ने देवस्य द्योतमानस्य ते तव दुर्मतयो निग्रहबुद्धयो भृमाच्चित् भ्रमादपि ॥ अथ संप्रसारणं

छांदसं ॥ प्रमादादपीत्यर्थः । अस्मान्मा नशंत । मा व्याप्नुवंतु ॥ नशदिति व्याप्तिकर्मसु पाठात् ॥

॥ अथ त्रयोविंशी ॥

स मर्तो अग्ने स्वनीक रेवानमर्त्ये य आजुहोति हव्यं ।
स देवता वसुवनिं दधाति यं सूरिरर्थी पृच्छमान एति ॥२३॥

सः । मर्तः । अग्ने । सुऽअनीक । रेवान् । अमर्त्ये । यः । आऽजुहोति । हव्यं ।
सः । देवता । वसुऽवनिं । दधाति । यं । सूरिः । अर्थी । पृच्छमानः । एति ॥२३॥

स्वनीक सुतेजस्क हे अग्ने अमर्त्येऽमनुष्ये देवतात्मनि त्वयि हव्यं हविर्य आजुहोति स मर्तो मनुष्यो रेवान् धनवान्भवति । यं मर्त्यं सूरिः प्राज्ञोऽर्थी धनादिकामः पृच्छमानोऽसावुदारः क्वास्त इति पृच्छन्नेति अभिगच्छति स एव मनुष्यो देवता देवताभ्यो वसुवनिं धनपोषं ददाति । धारयति । यद्वा स देवताग्निर्वसुवनिं यजमानं दधाति धारयति यमग्निं सूरिः स्तोतार्थी प्रयोजनवान् पृच्छमानः कोऽसावग्निरिति पृच्छमान एति ॥

॥ अथ चतुर्विंशी ॥

महो नो अग्ने सुवितस्य विद्वान्रयिं सूरिभ्य आ वहा बृहंतं ।
येन वयं सहसावन्मदेमाविक्षितास आयुषा सुवीराः ॥२४॥

महः । नः । अग्ने । सुवितस्य । विद्वान् । रयिं । सूरिऽभ्यः । आ । वह । बृहंतं ।
येन । वयं । सहसाऽवन् । मदेम । अविऽक्षितासः । आयुषा । सुऽवीराः ॥२४॥

हे अग्ने नोऽस्मदीयस्य महो महतः सुवितस्य कल्याणस्य कर्मणो विद्वान् । अस्मदीयं कल्याणं कर्म जानन्नित्यर्थः । त्वं सूरिभ्यः स्तोतृभ्योऽस्मभ्यं बृहंतं महांतं रयिं धनमावह । रयिमेव विशिनष्टि । हे सहसावन् बलवन्नग्ने येन धनेन वयं स्तोतारोऽविक्षितासोऽविक्षीणा आयुषा पूर्णायुषः सुवीराः कल्याणपुत्रपौत्राश्च संतो मदेम हृष्येम ॥

॥ अथ पंचविंशी ॥

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।
रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥२५॥

न । मे । ब्रह्माणि । अग्ने । उत् । शशाधि । त्वं । देव । मघवत्ऽभ्यः । सुसूदः ।
राती । स्याम । उभयासः । आ । ते । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥२५॥

इयमृक् प्रागेव व्याख्याता ॥

॥ इति पंचमस्य प्रथमे सप्तविंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पंचमाष्टके प्रथमोऽध्यायः समाप्तः ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

जुषस्व न इत्येकादशर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं । आप्रशब्दोक्तत्वादिदं तनूनपाद्रहितं । समिद्धाद्या अग्निविशेषाः प्रत्यृचं देवता उक्ताः । तथा चानुक्रम्यते । जुषस्वैकादशाप्रमिति ॥ पशाविष्टाविदमाप्रीसूक्तं । सूत्रितं च । जुषस्व नः समिधमिति वसिष्ठानां । आ० ३.२. । इति ॥ पत्नीसंयाजे त्वाष्ट्रयागस्य याज्या त्वाष्ट्रे पशावपि पुरोडाशस्यानुवाक्येयमिति पूर्वमुक्तं ॥

॥ तत्र प्रथमामृचमाह ॥

जुषस्व नः समिधमग्ने अद्य शोचा बृहद्यजतं धूममृण्वन् ।
उप स्पृश दिव्यं सानु स्तूपैः सं रश्मिभिस्ततनः सूर्यस्य ॥१॥

जुषस्व । नः । संऽइधं । अग्ने । अद्य । शोच । बृहत् । यजतं । धूमं । ऋण्वन् ।
उप । स्पृश । दिव्यं । सानु । स्तूपैः । सं । रश्मिऽभिः । ततनः । सूर्यस्य ॥१॥

हे अग्ने नोऽस्माकं समिधमद्य जुषस्व । सेवस्व । यजतं यजनीयं प्रशस्तं

धूममृण्वन् प्रेरयन् बृहद्यंतं शोच । दीप्यस्व च । किंच दिव्यमंतरिक्षभवं सानु समुच्छ्रितं स्तूपैस्तुपै रश्मिभिरुपस्पृश । अपि च सूर्यस्य रश्मिभिस्तेजोभिः संततनः । संगच्छस्व ॥

॥ अथ द्वितीया ॥

नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ।
ये सुक्रतवः शुचयो धियंधाः स्वदंति देवा उभयानि हव्या ॥२॥
नराशंसस्य । महिमानं । एषां । उप । स्तोषाम । यजतस्य । यज्ञैः ।
ये । सुऽक्रतवः । शुचयः । धियंऽधाः । स्वदंति । देवाः । उभयानि । हव्या ॥२॥

ये देवाः सुक्रतवः सुप्रज्ञाः सुकर्माणो वा शुचयो दीप्तिमंतो धियंधाः कर्मणां धारयितार उभयानि सौमिकानि च हविःसंस्थादीनि च हव्या हव्यानि स्वदंति स्वदयंति भक्षयंति तेषामेषां मध्ये यज्ञैर्हविर्भिः स्तोत्रैर्वा यजतस्य यजनीयस्य नराशंसस्य नरैः प्रशंसनीयस्याग्निविशेषस्य महिमानं महत्त्वमुपस्तोषाम । वयमुपस्तुमः । तथा च यास्कः । नरा आसीनाः शंसंति । अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति । तस्यैषा भवति । नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैर्ये सुकर्माणः शुचयो धियं धारयितारः स्वदयंतु देवा उभयानि हवींषि सोमं चेतराणि च । नि० ८. ६. । इति ॥

॥ अथ तृतीया ॥

ईळेन्यं वो असुरं सुदक्षमंतर्दूतं रोदसी सत्यवाचं ।
मनुष्वदग्निं मनुना समिद्धं समध्वराय सदमिन्महेम ॥३॥
ईळेन्यं । वः । असुरं । सुऽदक्षं । अंतः । दूतं । रोदसी इति । सत्यऽवाचं ।
मनुष्वत् । अग्निं । मनुना । संऽइद्धं । सं । अध्वराय । सदं । इत् । महेम ॥३॥

हे अध्वर्यवो वो यूयमीळेन्यं स्तुत्यमसुरं बलवंतं सुदक्षं सुप्रज्ञं रोदसी रोदस्योरंतर्मध्ये दूतं देवानां हविर्वहनार्थं चरंतं सत्यवाचं मनुष्वन्मनुष्यवन्मनुना समिद्धं यथेदानीं मनुष्याः समिंधते तथा पूर्वं मनुना प्रजापतिना समिद्धमग्निमध्वराय यज्ञाय सदमित्सदैव संमहेम । संपूजयत ॥ मध्यमपुरुषस्य व्यत्ययेनोत्तमपुरुषत्वं ॥

॥ अथ चतुर्थी ॥

सपर्यवो भरमाणा अभिज्ञु प्र वृंजते नमसा बर्हिरग्नौ ।

आजुह्वाना घृतपृष्ठं पृषद्वदध्वर्यवो हविषा मर्जयध्वं ॥४॥

सपर्यवः । भरमाणाः । अभिऽज्ञु । प्र । वृंजते । नमसा । बर्हिः । अग्नौ ।

आऽजुह्वानाः । घृतऽपृष्ठं । पृषत्ऽवत् । अध्वर्यवः । हविषा । मर्जयध्वं ॥४॥

सपर्यवः परिचरणमिच्छंतोऽभिज्ञु अभिगतजानुकं भरमाणाः पादैर्भरंतो बर्हिर्नमसा हविषा सहाग्नौ प्रवृंजते । प्रभरंति । तदेव विशदयति । हे अध्वर्यवो घृतपृष्ठं घृतसंसिक्तपृष्ठं पृषद्वत् स्थूलविंदुभिर्युक्तं बर्हिर्हविषा सहाजुह्वाना मर्जयध्वं । अग्निं परिचरत ॥

॥ अथ पंचमी ॥

स्वाध्यो३ वि दुरो देवयंतोऽशिश्रयू रथयुर्देवताता ।

पूर्वी शिशुं न मातरा रिहाणे समग्रुवो न समनेष्वंजन् ॥५॥

सुऽआध्यः । वि । दुरः । देवऽयंतः । अशिश्रयुः । रथऽयुः । देवऽताता ।

पूर्वी इति । शिशुं । न । मातरा । रिहाणे इति । सं । अग्रुवः । न । समनेषु । अंजन् ॥५॥

स्वाध्यः सुकर्माणो देवयंतो देवकामा यजमाना रथयू रथकामाश्च ॥ जसि पूर्वसवर्णो ह्रस्वश्च ॥ देवताता देवतातौ यज्ञे दुरो यज्ञगृहद्वाराणि व्यशिश्रयुः । आश्रितवंतः । किंच समनेषु यज्ञेषु पूर्वी प्राचीने प्रागग्रे जुहूपभृतौ शिशुं न वत्समिव मातरौ गावौ रिहाणे अग्निं लिहाने अग्रुवो न यथा नद्यः क्षेचाग्र्यु- दकेन तद्वत्समंजन् । अध्वर्यव आज्येन समंजंति ॥

॥ इति पंचमस्य द्वितीये प्रथमो वर्गः ॥

॥ अथ षष्ठी ॥

उत योषणे दिव्ये मही न उषासानक्ता सुदुघेव धेनुः ।

बर्हिषदा पुरुहूते मघोनी आ यज्ञिये सुविताय श्रयेतां ॥६॥

उत । योषणे इति । दिव्ये इति । मही इति । नः । उषसानक्ता । सुदुघाऽइव । धेनुः ।

बर्हिऽसदा । पुरुहूते इति पुरुऽहूते । मघोनी इति । आ । यज्ञिये इति । सुविताय ।

श्रयेतां ॥६॥

उतापि च योषणे युवत्यौ स्त्रीरूपे वा दिव्ये दिवि भवे मही महत्यौ बर्हिषदा बर्हिषि सीदंत्यौ पुरुहूते बहुभिः स्तुते मघोनी धनवत्यौ यज्ञिये यज्ञार्हे उषासानक्ताहोरात्रे सुदुघेव धेनुः कामधुग्धेनुरिव नोऽस्मान् सुविताय कल्याणायाश्रयेतां ॥

॥ अथ सप्तमी ॥

विप्रा यज्ञेषु मानुषेषु कारू मन्ये वां जातवेदसा यजध्यै ।
ऊर्ध्वं नो अध्वरं कृतं हवेषु ता देवेषु वनथो वार्याणि ॥७॥
विप्रा । यज्ञेषु । मानुषेषु । कारू इति । मन्ये । वां । जातऽवेदसा । यजध्यै ।
ऊर्ध्वं । नः । अध्वरं । कृतं । हवेषु । ता । देवेषु । वनथः । वार्याणि ॥७॥

हे दैव्यौ होतारौ विप्रा मेधाविनौ जातवेदसा जातधनौ मानुषेषु मनुष्यैः क्रियमाणेषु यज्ञेषु कारू कर्मणां कर्तारौ वां युवां यजध्यै यष्टुं मन्ये । स्तौमि । किंच हवेषु हवनेषु स्तोत्रेषु सत्सु नोऽस्माकमध्वरमकुटिलं यज्ञमूर्ध्वं देवाभिमुखं कृतं । कुरुतं च । अपि च ता तौ युवां देवेषु विद्यमानानि वार्याणि धनानि वनथः । संभजथः । तान्यस्मभ्यं संप्रयच्छथ इत्यर्थः ॥

॥ अथाष्टमी ॥

आ भारती भारतीभिः सजोषा इळा देवैर्मनुष्येभिरग्निः ।
सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदंतु ॥८॥
आ । भारती । भारतीभिः । सऽजोषाः । इळा । देवैः । मनुष्येभिः । अग्निः ।
सरस्वती । सारस्वतेभिः । अर्वाक् । तिस्रः । देवीः । बर्हिः । आ । इदं । सदंतु ॥८॥

एतदाद्यृक्चतुष्टयं द्वितीयाष्टकस्याष्टमाध्याये । म० ३. ४. ८. । यद्यपि व्याख्यातं तथापि व्यवधानात्संक्षेपतोऽत्रापि व्याख्यायते । भारती भरतस्यादित्यस्य पत्नी भारतीभिः सजोषाः सहितेळा मनुष्येभिर्मनुष्यलोकभवैर्देवैः सार्धमग्निरागच्छतु । सरस्वती सारस्वतेभिः सारस्वतैर्मध्यमस्थानैर्देवैः सार्धमर्वागस्मदभिमुखमागच्छतु । आगत्य तिस्रो देवीर्देव्यः ॥ प्रथमार्थे द्वितीया ॥ बर्हिरिदमासदंतु ॥

॥ अथ नवमी ॥

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व ।
यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥९॥

तत् । नः । तुरीपं । अध । पोषयित्नु । देव । त्वष्टः । वि । रराणः । स्यस्वेति स्यस्व ।
यतः । वीरः । कर्मण्यः । सुऽदक्षः । युक्तऽग्रावा । जायते । देवऽकामः ॥९॥

देव द्योतमान हे त्वष्टा रराणो रममाणस्त्वं नोऽस्माकं तुरीपं त्वरितमाप्नुवत् पोषयित्नु पोषकरं तद्रेतो वि स्यस्व । विशेषेणावसानं प्रापय । विमोचयेत्यर्थः । यतो रेतसः कर्मण्यः कर्मसु साधुः सुदक्षः सुबलो युक्तग्रावा सोमसुत् देवकामो वीरः पुत्रो जायते ॥

॥ अथ दशमी ॥

वनस्पतेऽव सृजोप देवानग्निर्हविः शमिता सूदयाति ।
सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेद ॥१०॥

वनस्पते । अव । सृज । उप । देवान् । अग्निः । हविः । शमिता । सूदयाति ।
सः । इत् । ऊं इति । होता । सत्यऽतरः । यजाति । यथा । देवानां । जनिमानि । वेद ॥१०॥

हे वनस्पते देवानुपावसृज । अथ परोक्षस्तुतिः । अग्निर्वनस्पतिः शमिता शामित्ररूपः सन् हविः सूदयाति । प्रेरयतु । सेत्स एव वनस्पतिर्होता देवानामाह्वाता सत्यतरोऽपि सन् यजाति । यजतु । देवानां जनिमानि जननानि यथा स्वयं वेद तथा ॥

॥ अथैकादशी ॥

आ याह्यग्ने समिधानो अर्वाङिंद्रेण देवैः सरथं तुरेभिः ।
बर्हिर्न आस्तामदितिः सुपुत्रा स्वाहा देवा अमृता मादयंतां ॥११॥

आ । याहि । अग्ने । संऽइधानः । अर्वाङ् । इंद्रेण । देवैः । सऽरथं । तुरेभिः ।
बर्हिः । नः । आस्तां । अदितिः । सुऽपुत्रा । स्वाहा । देवाः । अमृताः । मादयंतां ॥११॥

हे अग्ने समिधान अर्वागस्मदभिमुखस्त्वमिंद्रेण तुरेभिस्त्वरितैर्देवैश्च सरथं

समानरथं यथा भवति तथायाहि। आगच्छ। नोऽस्माकं बर्हिरध्यास्तामदितिश्च सुपुत्रा कल्याणपुत्रा। स्वाहा देवाश्च सर्वेऽमृताः संतो मादयंतामिति॥

॥ इति पंचमस्य द्वितीये द्वितीयो वर्गः॥

अग्निं वो देवमिति दशर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयं। अत्रेयमनुक्रमणिका। अग्निं वो दशेति॥ अग्निं वो देवमित्येतदादीनि दश सूक्तानि तृतीयचतुर्थवर्जितानि प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे च विनियुक्तानि। सूचितं च। अग्निं वो देवमिति दशानां तृतीयचतुर्थे उद्धरेत्। आ० ४.१३.। इति॥ व्यूळ्हे दशरात्रेऽष्टमेऽहनीदं सूक्तमाज्यशस्त्रं। सूत्र्यते हि। द्वितीयस्याग्निं वो देवमित्याज्यं। आ० ८.१०.। इति॥

॥ तत्र प्रथमा॥

अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वं।

यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्द्धा घृतान्नः पावकः॥१॥

अग्निं। वः। देवं। अग्निऽभिः। सऽजोषाः। यजिष्ठं। दूतं। अध्वरे। कृणुध्वं।

यः। मर्त्येषु। निऽध्रुविः। ऋतऽवा। तपुःऽमूर्द्धा। घृतऽअन्नः। पावकः॥१॥

हे देवा वो यूयं देवं द्योतमानमग्निभिरन्यैरग्निभिः सजोषाः सजोषसं सहितं॥ द्वितीयार्थे प्रथमा॥ यजिष्ठं यष्टृतममग्निमध्वरे कौटिल्यरहिते यज्ञे दूतं कृणुध्वं। कुरुत। योऽग्निर्देवोऽपि सन् मर्त्येषु निध्रुविर्नितरां ध्रुवस्तिष्ठति ऋतावा यज्ञवान् सत्यवान्वा तपुर्मूर्द्धा तापकतेजा घृतान्नः पावकः शोधकश्च भवति॥

॥ अथ द्वितीया॥

प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्यस्थात्।

आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति॥२॥

प्रोथत्। अश्वः। नः। यवसे। अविष्यन्। यदा। महः। संऽवरणात्। वि। अस्थात्।

आत्। अस्य। वातः। अनु। वाति। शोचिः। अध। स्म। ते। व्रजनं। कृष्णं। अस्ति॥२॥

यवसे घासेऽविष्यन् भक्षयन् प्रोथत् शब्दं कुर्वन् संचरन्वाश्वो न अश्व इव महो महतः संवरणान्निरोधात् दावरूपोऽग्निर्यदा व्यस्थात् सततेषु वृक्षेषु वितिष्ठते

आसदास्याग्नेः शोचिरर्चिरन्नु वातो वाति। अथ प्रत्यक्षस्तुतिः। अथानंतरं हे अग्ने ते तव प्रजनं वर्त्म कृष्णमस्ति। भवति। स्मेति पूरणः॥

॥ अथ तृतीया ॥

उद्यस्य ते नवजातस्य वृष्णोऽग्ने चरंत्यजरा इधानाः।

अच्छा द्यामरुषो धूम एति सं दूतो अग्न ईयसे हि देवान् ॥३॥

उत्। यस्य। ते। नवऽजातस्य। वृष्णः। अग्ने। चरंति। अजराः। इधानाः।

अच्छ। द्यां। अरुषः। धूमः। एति। सं। दूतः। अग्ने। ईयसे। हि। देवान् ॥३॥

हे अग्ने नवजातस्य नवप्रादुर्भावस्य वृष्णो वर्षितुर्यस्य ते तवाजरा जरारहिता ज्वाला इधाना उच्चरंति उद्गच्छंति अस्यारुष आरोचमानो धूमो द्यामच्छ दिवमभ्येति। गच्छति। हे अग्ने त्वं दूतः सन् देवान् समीयसे हि। संप्राप्नोषि च ॥

॥ अथ चतुर्थी ॥

वि यस्य ते पृथिव्यां पाजो अश्रेत्तृषु यदन्ना समवृक्त जंभैः।

सेनेव सृष्टा प्रसितिष्ट एति यवं न दस्म जुह्वा विवेक्षि ॥४॥

वि। यस्य। ते। पृथिव्यां। पाजः। अश्रेत्। तृषु। यत्। अन्ना। संऽअवृक्त। जंभैः।

सेनाऽइव। सृष्टा। प्रऽसितिः। ते। एति। यवं। न। दस्म। जुह्वा। विवेक्षि ॥४॥

हे अग्ने यस्य दावरूपस्य ते तव पाजस्तेजः पृथिव्यां भूम्यां तृषु क्षिप्रं व्यश्रेत् विश्रयति यद्यदान्नानि काष्ठादीनि जंभैर्दंतैः। ज्वालाभिरित्यर्थः। समवृक्त वृंक्ते खादति। तथा सेनेव सृष्टोद्युक्ता ते तव प्रसितिर्ज्वालैति। गच्छति। दस्म हे दर्शनीयाग्ने त्वं यवं न यवमिव जुह्वा ज्वालया विवेक्षि। काष्ठादीनि भक्षयसि व्याप्नोषि वा ॥

॥ अथ पंचमी ॥

तमिद्दोषा तमुषसि यविष्ठमग्निमत्यं न मर्जयंत नरः।

निशिशाना अतिथिमस्य योनौ दीदाय शोचिराहुतस्य वृष्णः ॥५॥

तं। इत्। दोषा। तं। उषसि। यविष्ठं। अग्निं। अत्यं। न। मर्जयंत। नरः।

निऽशिशानाः। अतिथिं। अस्य। योनौ। दीदाय। शोचिः। आऽहुतस्य। वृष्णः ॥५॥

यविष्ठं युवतममतिथिमतिथिवत्पूज्यं तमित्तमेवाग्निं दोषा दोषायां रात्रावुषसि वासरेऽपि तमेवास्यार्य्येर्योनौ स्थान आहवनीयायतने धिष्ण्ये वा निशिशाना दीपयंतो नरो मनुष्या अत्यं न सततगमनयुक्तं वोढारमश्वमिव मर्जयंत। परिच- रंति। आहुतस्य च वृष्णः कामानां वर्षितुरग्नेस्तस्य शोचिर्ज्वाला दीदाय। दीप्यते॥

॥ इति पंचमस्य द्वितीये तृतीयो वर्गः ॥

॥ अथ षष्ठी ॥

सुसंदृक्ते स्वनीक प्रतीकं वि यद्रुक्मो न रोचस उपाके।

दिवो न ते तन्यतुरेति शुष्मश्चित्रो न सूरः प्रति चक्षि भानुं ॥६॥

सुऽसंदृक्। ते। सुऽअनीक। प्रतीकं। वि। यत्। रुक्मः। न। रोचसे। उपाके।

दिवः। न। ते। तन्यतुः। एति। शुष्मः। चित्रः। न। सूरः। प्रति। चक्षि। भानुं॥६॥

स्वनीक हे सुतेजस्काग्ने यद्यदा रुक्मो न सूर्य इव। सुवर्णमिव वा। उपा- केऽंतिके वि रोचसे विशेषेण दीप्यसे तदा ते तव प्रतीकं रूपमंगं वा सुसंदृक् सुसंदर्शनं भवति। किंच ते तव शुष्मो दिवोऽंतरिक्षात्तन्यतुर्नाशनिरिवेति। निर्गच्छति। चित्रो दर्शनीयः सूरो न सूर्य इव भानुं स्वां दीप्तिं प्रतिचक्षि। प्रदर्शयसि॥

॥ अथ सप्तमी ॥

यथा वः स्वाहाग्नये दाशेम परीळाभिर्घृतवद्भिश्च हव्यैः।

तेभिर्नो अग्ने अमितैर्महोभिः शतं पूर्भिरायसीभिर्नि पाहि ॥७॥

यथा। वः। स्वाहा। अग्नये। दाशेम। परि। इळाभिः। घृतवत्ऽभिः। च। हव्यैः।

तेभिः। नः। अग्ने। अमितैः। महःऽभिः। शतं। पूःऽभिः। आयसीभिः। नि। पाहि॥७॥

हे अग्ने अग्नयेऽग्रस्य नेत्रे वस्तुभ्यं स्वाहा स्वाहुतं हविः। किंच यथा वयमिळाभिर्गोभिर्गोविकारैः क्षीरादिभिर्घृतवद्भिर्घृतसहितैर्हव्यैः पुरोडाशादिभिश्च दाशेम परिचरेम तथा त्वमपि तेभिः प्रसिद्धैरमितैरपरिमितैर्महोभिस्तेजोभिः शतमपरिमिताभिरायसीभिर्हिरण्मयीभिः। रुक्ममय इति हिरण्यनामसु पा- ठात्। पूर्भिर्नगरीभिरिव नोऽस्मान् नि पाहि। नितरां रक्ष॥

॥ अथाष्टमी ॥

या वा ते संति दाशुषे अधृष्टा गिरो वा याभिर्नृवतीरुरुष्याः ।
ताभिर्नः सूनो सहसो नि पाहि स्मत्सूरीञ्जरितॄञ्जातवेदः ॥८॥
याः । वा । ते । संति । दाशुषे । अधृष्टाः । गिरः । वा । याभिः । नृऽवतीः । उरुष्याः ।
ताभिः । नः । सूनो इति । सहसः । नि । पाहि । स्मत् । सूरीन् । जरितॄन् । जातऽवेदः ॥८॥

सहसः सूनो हे बलस्य पुत्र जातवेदोऽग्ने दाशुषे दाशुषस्ते तव या वा याश्च ज्वालाः संति । अधृष्टा रक्षोभिरप्रधृषिता गिरो वा गिरश्च संति । याभिर्गीर्भिर्नृवतीः पुत्रवतीः प्रजा उरुष्या रक्षेः ताभिरुभयीभिर्नोऽस्मान् । स्मदिति प्रशस्तवचनः । प्रशस्तान् सूरीन् हविषां प्रेरकान् जरितॄन् स्तोतॄंश्च नि पाहि । नितरां रक्ष ॥

॥ अथ नवमी ॥

निर्यत्पूतेव स्वधितिः शुचिर्गात्स्वया कृपा तन्वा३रोचमानः ।
आ यो मात्रोरुशेन्यो जनिष्ट देवयज्याय सुक्रतुः पावकः ॥९॥
निः । यत् । पूताऽइव । स्वऽधितिः । शुचिः । गात् । स्वया । कृपा । तन्वा । रोचमानः ।
आ । यः । मात्रोः । उशेन्यः । जनिष्ट । देवऽयज्याय । सुऽक्रतुः । पावकः ॥९॥

यद्यदा शुचिरग्निः स्वया स्वकीयया तन्वा ततया कृपा कृपया दीप्त्या रोचमानः पूतेव स्वधितिस्तीक्ष्णीकृता स्वधितिरिव निर्गात् काष्ठान्निर्गच्छति तदानीं देवयज्याय भवति । तदेव विशदयति । योऽग्निरुशेन्यः कमनीयः सुक्रतुः सुकर्मा पावकः शोधकश्च मात्रोररण्योराजनिष्ट आजायत स देवयज्याय भवतीति ॥

॥ अथ दशमी ॥

एता नो अग्ने सौभगा दिदीह्यपि क्रतुं सुचेतसं वतेम ।
विश्वा स्तोतृभ्यो गृणते च संतु यूयं पात स्वस्तिभिः सदा नः ॥१०॥
एता । नः । अग्ने । सौभगा । दिदीहि । अपि । क्रतुं । सुऽचेतसं । वतेम ।
विश्वा । स्तोतृऽभ्यः । गृणते । च । संतु । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥१०॥

हे अग्ने एतैतानि परिदृश्यमानानि सौभगा सौभगानि शोभनानि धनानि नोऽस्मभ्यं दिदीहि । दीपय । देहि वा । अप्यपि च क्रतुं कर्म यज्ञानां कर्तारं

वा सुचेतसं शोभनप्रज्ञानयुक्तं सुप्रज्ञानं पुत्रं वा वनेम। संभजेमहि॥ वनतेः संभजनार्थस्य वर्णांतरागमे सति रूपं॥ विश्वा विश्वानि धनानि स्तोतृभ्य उद्गातृभ्यो गृणते शंसते च संतु। यूयं त्वत्परिवाराश्च सर्वे यूयं नोऽस्मान् स्वस्तिभिः क्षेमैः सदा सर्वदा पात। रक्षत॥

॥ इति पंचमस्य द्वितीये चतुर्थो वर्गः॥

प्र वः शुक्रायेति दशर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयं। प्र व इत्यनुक्रांतं॥ प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तमध्ये द्वितीयत्वेनोक्तः सूक्तविनियोगः। ।आ॰ ४.१३.॥ एकादशिन आग्नेये पशौ प्र वः शुक्रायेत्येषा वपाया याज्या। सूचितं च। प्र वः शुक्राय भानवे भरध्वं यथा विप्रस्य मनुषो हविर्भिः। आ॰ ३.७.। इति॥

॥ तत्र प्रथमा॥

प्र वः शुक्राय भानवे भरध्वं हव्यं मतिं चाग्नये सुपूतं।
यो दैव्यानि मानुषा जनूंष्यंतर्विश्वानि विद्मना जिगाति॥१॥

प्र। वः। शुक्राय। भानवे। भरध्वं। हव्यं। मतिं। च। अग्नये। सुऽपूतं।
यः। दैव्यानि। मानुषा। जनूंषि। अंतः। विश्वानि। विद्मना। जिगाति॥१॥

हे हविषां वोढारो वो यूयं शुक्राय शुभ्राय भानवे दीप्तायाग्नये सुपूतं सुशुद्धं हव्यं मतिं स्तुतिं च प्रभरध्वं। योऽग्निर्दैव्यानि मानुषा मानुषाणि च विश्वा विश्वानि जनूंषि जातान्यंतरंतरा विद्मना प्रज्ञानेन मार्गेण वा जिगाति गच्छति। देवान्मनुष्यांश्चांतरा हवींषि नेतुं वर्तत इत्यर्थः॥

॥ अथ द्वितीया॥

स गृत्सो अग्निस्तरुणश्चिदस्तु यतो यविष्ठो अजनिष्ट मातुः।
सं यो वना युवते शुचिदन्भूरि चिदन्ना समिदत्ति सद्यः॥२॥

सः। गृत्सः। अग्निः। तरुणः। चित्। अस्तु। यतः। यविष्ठः। अजनिष्ट। मातुः।
सं। यः। वना। युवते। शुचिऽदन्। भूरि। चित्। अन्ना। सं। इत्। अत्ति। सद्यः॥२॥

स चित्स एव गृत्सो मेधावी। तथा च यास्कः। गृत्स इति मेधाविनाम। अग्निस्तरुणस्तारको भवति। तदा यतो यदा मातुररण्या यविष्ठो युवतमः सन्

प्रियाः संतु । भवंतु । किंच ये मघवानो धनवंतो यंतारः प्रदातारो जनानाम-स्मदीयानामूर्वान् समूहान् गोनां गवां चोर्वाण्द्यंत प्रयच्छंति ते च मम प्रियासः संत्विति पूर्वेणान्वयः ॥

॥ अथाष्टमी ॥

येषामिळ्ळा घृतहस्ता दुरोण आँ अपि प्राता निषीदति ।
तांस्त्रायस्व सहस्य द्रुहो निदो यच्छा नः शर्म दीर्घश्रुत् ॥८॥
येषां । इळ्ळा । घृतऽहस्ता । दुरोणे । आ । अपि । प्राता । निऽसीदति ।
तान् । त्रायस्व । सहस्य । द्रुहः । निदः । यच्छ । नः । शर्म । दीर्घऽश्रुत् ॥८॥

येषां दुरोणे गृहे घृतहस्ता । घृतयुक्तौ हस्तौ यस्या असौ घृतहस्ता । घृतेना-भिघारितेत्यर्थः । इळ्ळान्नरूपा हविर्लक्षणा देवी ॥ इरेळेत्यन्ननामसु पाठात् ॥ प्राता पूर्णानिषीदति आसीदति । अपीति पूरणः । तान्हविष्मतो यजमानान् हे सहस्य सहसे बलाय हिताग्ने द्रुहो द्रोग्धुर्निदो निंदकाञ्च शत्रोस्त्रायस्व । नोऽस्मभ्यं दीर्घश्रुत् दीर्घकालं श्रोतव्यं शर्म सुखं गृहं वा यच्छ च । देहि ॥

॥ अथ नवमी ॥

स मंद्रया च जिह्वया वह्निरासा विदुष्टरः ।
अग्ने रयिं मघवद्भ्यो न आ वह हव्यदातिं च सूदय ॥९॥
सः । मंद्रया । च । जिह्वया । वह्निः । आसा । विदुःऽतरः ।
अग्ने । रयिं । मघवत्ऽभ्यः । नः । आ । वह । हव्यऽदातिं । च । सूदय ॥९॥

हे अग्ने मंद्रया च मोदयित्र्या देवानामासास्यस्थानीयया जिह्वया ज्वालया वह्निर्हविषां वोढा विदुष्टरो विद्वत्तरः स प्रसिद्धस्त्वं मघवद्भ्यो हविष्मद्भ्यो नोऽस्मभ्यं रयिं धनमावह च । हव्यदातिं । हव्यानि ददातीति हव्यदातिर्यजमानः । तं । तथा च वाजसनेयिन आमनंति । यजमानो वै हव्यदातिरिति । सूदय च । कर्मसु प्रेरय च ॥

॥ अथ दशमी ॥

ये राधांसि ददत्यश्व्या मघा कामेन श्रवसो महः ।
ताँ अंहसः पिपृहि पर्तृभिष्ट्वं शतं पूर्भिर्यविष्ठ्य ॥१०॥

ये । राधांसि । ददति । अश्व्या । मघा । कामेन । श्रवसः । महः ।
तान् । अंहसः । पिपृहि । पर्तृऽभिः । त्वं । शतं । पूःऽभिः । यविष्ठ्य ॥१०॥

हे यविष्ठ्य युवतमाग्ने त्वं ये यजमाना महो महतः श्रवसो यशसः कामेनेच्छया । यशस्कामाः संत इत्यर्थः । राधांसि साधकान्यश्व्याश्वात्मकानि मघा मघानि ददति तान्दातॄनंहसः पापात् शत्रोर्वा पर्तृभी रक्षासाधनभूतैः शतमपरिमिताभिः पूर्भिर्नगरीभिश्च पिपृहि । पालय ॥

॥ अथैकादशी ॥

देवो वो द्रविणोदाः पूर्णां विवष्ट्यासिचं ।
उद्वा सिंचध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥११॥
देवः । वः । द्रविणःऽदाः । पूर्णां । विवष्टि । आऽसिचं ।
उत् । वा । सिंचध्वं । उप । वा । पृणध्वं । आत् । इत् । वः । देवः । ओहते ॥११॥

द्रविणोदा धनानां दाता देवोऽग्निर्वो युष्मदीयां पूर्णां हविषासिचमासिक्तां स्रुचं विवष्टि । कामयते । अत उत्सिंचध्वं वा सोमेन पात्रं । उपपृणध्वं वा सोमं ॥ वाशब्दौ समुच्चयार्थौ ॥ ध्रुवग्रहेण होतृचमसं पूरयत चाग्नये सोमं यच्छत चेत्यर्थः । आदिदनंतरमेव देवोऽग्निर्वो युष्मानोहते । वहति ॥

॥ अथ द्वादशी ॥

तं होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत ।
दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषे ॥१२॥
तं । होतारं । अध्वरस्य । प्रऽचेतसं । वह्निं । देवाः । अकृण्वत ।
दधाति । रत्नं । विधते । सुऽवीर्यं । अग्निः । जनाय । दाशुषे ॥१२॥

देवाः प्रचेतसं प्रकृष्टमतिमग्निमध्वरस्य यज्ञस्य वह्निं वोढारं होतारं चाकृण्वन् । अकुर्वन् । किमर्थमित्यत आह । स चाग्निर्विधते परिचरते दाशुषे हविषां प्रदात्रे जनाय सुवीर्यं शोभनवीर्योपेतं रत्नं रमणीयं धनं दधाति । ददात्वित्यर्थः ॥

॥ इति पंचमस्य द्वितीये द्वाविंशो वर्गः ॥

अग्ने भव सुषमिधेति सप्तर्चं सप्तदशं सूक्तं वसिष्ठस्यार्षमग्निदेवताकं । सप्तापि

द्विपदास्त्रिष्टुभः । तथैवानुक्रम्यते । अग्ने भव सप्त द्वैपदं त्रैष्टुभमिति ॥ अतिरात्रे षष्ठेऽहनि तृतीयसवने मैत्रावरुणशस्त्रेऽग्ने भवेति तृचोऽनुरूपः । सूत्र्यते हि । अग्ने त्वं नोऽअंतमोऽग्ने भव सुषमिधा समिद्ध इति स्तोत्रियानुरूपौ। आ० ८.२.। इति॥

॥ तत्र प्रथमा ॥

अग्ने भवं सुषमिधा समिद्ध उत बर्हिरुर्विया वि स्तृणीतां ॥१॥

अग्ने । भवं । सुऽसमिधा । संऽइद्धः । उत । बर्हिः । उर्विया । वि । स्तृणीतां ॥१॥

हे अग्ने सुषमिधा शोभनया समिधा समिद्धो भव । सम्यक् दीप्तो भव । उतापि च बर्हिरुर्विया विस्तीर्णमुपस्तृणीतामध्वर्युः ॥

॥ अथ द्वितीया ॥

उत द्वार उशतीर्वि श्रयंतामुत देवाँ उशत आ वहेह ॥२॥

उत । द्वारः । उशतीः । वि । श्रयंतां । उत । देवान् । उशतः । आ । वह । इह ॥२॥

उतापि चोशतीर्देवान् कामयमाना द्वारो यज्ञगृहस्य देव्यो वा ॥ तथा च यास्कः । द्वारो जवतेर्वा द्रवतेर्वा वारयतेर्वा । नि० ८.९.। इति ॥ विश्रयंतां । उतापि चोशतो यज्ञं कामयमानान्देवानिह यज्ञ आवह ॥

॥ अथ तृतीया ॥

अग्ने वीहि हविषा यक्षि देवान्स्वध्वरा कृणुहि जातवेदः ॥३॥

अग्ने । वीहि । हविषा । यक्षि । देवान् । सुऽअध्वरा । कृणुहि । जातऽवेदः ॥३॥

हे जातवेदो जातधनाग्ने वीहि । देवानभिगच्छ । हविषा देवान्यक्षि । यज च । स्वध्वरा स्वध्वरान् शोभनयज्ञांश्च कृणुहि । कुरु ॥

॥ अथ चतुर्थी ॥

स्वध्वरा करति जातवेदा यक्षद्देवाँ अमृतान्पिप्रयच्च ॥४॥

सुऽअध्वरा । करति । जातऽवेदाः । यक्षत् । देवान् । अमृतान् । पिप्रयत् । च ॥४॥

जातवेदा जातधनोऽग्निरमृतान्मरणरहितान्देवान् स्वध्वरा स्वध्वरान् शोभनयज्ञान् करति । करोतु । यक्षत् । हविषा यजतु च । पिप्रयत् । स्तोत्रैः प्रीणयतु च ॥

॥ अथ पंचमी ॥

वंस्व विश्वा वार्याणि प्रचेतः सत्या भवंत्वाशिषो नो अद्य ॥५॥

वंस्व। विश्वा। वार्याणि। प्रचेत इति प्रऽचेतः। सत्याः। भवंतु। आऽशिषः। नः। अद्य ॥५॥

हे प्रचेतः प्रकृष्टमतिमन्नग्ने विश्वा विश्वानि वार्याणि वरणीयानि धनानि वंस्व। अस्मभ्यं देहि। नोऽस्माकमाशिषोऽद्य सत्या यथार्था भवंतु ॥

॥ अथ षष्ठी ॥

त्वामु ते दधिरे हव्यवाहं देवासो अग्न ऊर्ज आ नपातं ॥६॥

त्वां। ऊं इति। ते। दधिरे। हव्यऽवाहं। देवासः। अग्ने। ऊर्जः। आ। नपातं ॥६॥

हे अग्ने ऊर्जो बलस्य नपातं पुत्रं ॥ सूनुर्नपादित्यपत्यनामसु पाठात् ॥ त्वामु त्वामेव ते प्रसिद्धा देवासो देवा हव्यवाहं हविषो वोढारमादधिरे। अकुर्वन्नित्यर्थः ॥

॥ अथ सप्तमी ॥

ते ते देवाय दाशतः स्याम महो नो रत्ना वि दध इयानः ॥७॥

ते। ते। देवाय। दाशतः। स्याम। महः। नः। रत्ना। वि। दधः। इयानः ॥७॥

हे अग्ने देवाय द्योतमानाय ते तुभ्यं ते प्रसिद्धा वसिष्ठा वयं दाशतो हवींषि ददतः स्याम। भवेम। अतो महो महांस्त्वमियान उपगम्यमानो याच्यमानो वा नोऽस्मभ्यं रत्ना रत्नानि रमणीयानि धनानि विदधः। विधत्स्व ॥

॥ इति पंचमस्य द्वितीये त्रयोविंशो वर्गः ॥

॥ इति सप्तमे मंडले प्रथमोऽनुवाकः ॥

द्वितीयेऽनुवाके षोडश सूक्तानि। तत्र त्वे ह यत्पितर इति पंचविंशत्यृचं प्रथमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमिंद्रदेवताकं। द्वाविंशादिभिश्चतसृभिः सुदासनाम्नो राज्ञो दानं स्तूयते। अतस्तास्तद्देवताकाः। अनुक्रम्यते हि। त्वे ह यत्पंचाधिकेंद्रं सुदासः पैजवनस्य चतस्रोऽंत्या दानस्तुतिरिति ॥ महाव्रत आदितः पंचदशर्चः शंसनीयाः। तथैव पंचमारण्यके सूचितं। त्वे ह यत्पितरश्चिन्न इंद्रेति पंचदश। ऐ० आ० ५.८.। इति ॥

॥ तत्र प्रथमा ॥

त्वे ह यत्पितरश्चिन्न इंद्र विश्वा वामा जरितारो असन्वन् ।
त्वे गावः सुदुघास्त्वे ह्यश्वास्त्वं वसु देवयते वनिष्ठः ॥१॥

त्वे इति । ह । यत् । पितरः । चित् । नः । इंद्र । विश्वा । वामा । जरितारः । असन्वन् ।
त्वे इति । गावः । सुऽदुघाः । त्वे इति । हि । अश्वाः । त्वं । वसु । देवऽयते । वनिष्ठः ॥१॥

हे इंद्र त्वे ह त्वय्येव नोऽस्माकं पितरश्चित् पितरोऽपि जरितारः स्तोतारः संतो यद्यस्मात्कारणाद्विश्वा विश्वानि वामा वामानि वननीयानि धनानि । तथा च यास्कः । वामं वननीयं भवतीति । असन्वन् अलभंत तस्माद्वयमपि धनकामास्त्वां स्तुमः । तद्युक्तं । हि यस्मात्कारणात्त्वे त्वयि गावः सुदुघा दोग्धुं सुशकाः संति त्वे त्वय्यश्वाः संति त्वं वसु धनं देवयते देवं त्वामिच्छते यजमानाय वनिष्ठो दातृतमो भवसि ॥

॥ अथ द्वितीया ॥

राजेव हि जनिभिः क्षेष्येवाव द्युभिरभि विदुष्कविः सन् ।
पिशा गिरो मघवन्गोभिरश्वैस्त्वायतः शिशीहि राये अस्मान् ॥२॥

राजाऽइव । हि । जनिऽभिः । क्षेषि । एव । अव । द्युऽभिः । अभि । विदुः । कविः । सन् ।
पिशा । गिरः । मघऽवन् । गोभिः । अश्वैः । त्वाऽयतः । शिशीहि । राये । अस्मान् ॥२॥

हे इंद्र त्वं जनिभिर्जायाभी राजेव द्युभिर्दीप्तिभिः सह क्षेष्येव । निवसस्येव । हीति पूरणः । किंच हे मघवन् धनवन्निंद्र विदुर्विद्वान् कविः क्रांतकर्मा क्रांतप्रज्ञो वा सन् गिरः स्तोतॄनस्मान् पिशा रूपेण हिरण्यादिना वा गोभिरश्वैश्चाभि अभितो रक्ष । त्वायतस्त्वत्कामानस्मान् राये शिशीहि । धनार्थं च संस्कुरु ॥

॥ अथ तृतीया ॥

इमा उ त्वा पस्पृधानासो अत्र मंद्रा गिरो देवयंतीरुप स्थुः ।
अर्वाची ते पथ्या राय एतु स्याम ते सुमताविंद्र शर्मन् ॥३॥

इमाः । ऊं इति । त्वा । पस्पृधानासः । अत्र । मंद्राः । गिरः । देवऽयंतीः । उप । स्थुः ।
अर्वाची । ते । पथ्या । रायः । एतु । स्याम । ते । सुऽमतौ । इंद्र । शर्मन् ॥३॥

हे इंद्र त्वा त्वामत्र यज्ञे स्तोतरि वा प्रवर्तमानाः पस्पृधानासः स्पर्धमाना मंद्रा मोदमाना इमा गिरः स्तुतय उपस्थुः । उपतिष्ठंति । अतस्ते तव रायो धनस्य पथ्या सृतिर्वाध्यस्मदभिमुख्येतु । गच्छतु । हे इंद्र वयं च ते सुमतौ सष्टुतौ वर्तमानाः शर्मन् शर्मणि सुखे स्याम । भूयास्म ॥

॥ अथ चतुर्थी ॥

धेनुं न त्वा सूयवसे दुदुक्षन्नुप ब्रह्माणि ससृजे वसिष्ठः ।
त्वामिन्मे गोपतिं विश्व आहा न इंद्रः सुमतिं गंत्वच्छ ॥४॥
धेनुं । न । त्वा । सुऽयवसे । दुधुक्षन् । उप । ब्रह्माणि । ससृजे । वसिष्ठः ।
त्वां । इत् । मे । गोऽपतिं । विश्वः । आह । आ । नः । इंद्रः । सुऽमतिं । गंतु । अच्छ ॥४॥

हे इंद्र सुयवसे सुतृणे गोष्ठे वर्तमानां धेनुं न धेनुमिव सुहविष्के यज्ञगृहे । दृष्टांतसामर्थ्याद्दार्ष्टांतिकलाभः । वर्तमानं त्वां दुधुक्षन् ॥ संहितायां व्यत्ययेन दकारः ॥ कामान् दोग्धुमिच्छन्वसिष्ठो ब्रह्माणि वत्सस्थानीयानि स्तोत्राण्युपससृजे । उपसृजते । मे मम विश्वः सर्वो जनस्त्वामित्त्वामेव गोपतिं गवां स्वामिनमाह । ब्रवीति । अथ परोक्षस्तुतिः । नोऽस्माकं सुमतिं सुष्टुतिमच्छाभि इंद्र आगंतु । आगच्छतु ॥

॥ अथ पंचमी ॥

अर्णांसि चित्पप्रथाना सुदास इंद्रो गाधान्यकृणोत्सुपारा ।
शर्धंतं शिम्युमुचथस्य नव्यः शापं सिंधूनामकृणोदशस्तीः ॥५॥
अर्णांसि । चित् । पप्रथाना । सुऽदासे । इंद्रः । गाधानि । अकृणोत् । सुऽपारा ।
शर्धंतं । शिम्युं । उचथस्य । नव्यः । शापं । सिंधूनां । अकृणोत् । अशस्तीः ॥५॥

नव्यः स्तुत्य इंद्रोऽर्णांसि शत्रुभिर्विदारितायाः परुष्ण्या उदकानि पप्रथाना चित् प्रथमानान्यपि सुदासे राज्ञे गाधानि सुपारा सुपाराणि पारयितुं तर्तुं योग्यानि चाकृणोत् । अकरोत् । अपि च शर्धंतमुत्साहमानं शिम्युं बोधमानं शापं विश्वरूपोद्भवमात्मनोऽभिशापमशस्तीरभिशस्तीश्चोचथस्य स्तोतुः सिंधूनां नदीनामकृणोत् । अकरोत् ॥

॥ इति पंचमस्य द्वितीये चतुर्विंशो वर्गः ॥

॥ अथ षष्ठी ॥

पुरोळा इत्तुर्वशो यक्षुरासीद्राये मत्स्यासो निशिता अपीव ।
श्रुष्टिं चक्रुर्भृगवो द्रुह्यवश्च सखा सखायमतरद्विषूचोः ॥ ६ ॥

पुरोळाः । इत् । तुर्वशः । यक्षुः । आसीत् । राये । मत्स्यासः । निऽशिताः । अपिऽइव ।
श्रुष्टिं । चक्रुः । भृगवः । द्रुह्यवः । च । सखा । सखायं । अतरत् । विषूचोः ॥ ६ ॥

यक्षुर्यज्ञकुशलः ॥ यजेः सन्प्रत्ययो न तु सनंतः । अतो न द्विर्भावः ॥ पुरोळाः पुरोगामी पुरोदाता वा । इदिति पूरणः । तुर्वशो नाम राजासीत् । स तुर्वशो राये धनप्राप्तय इंद्रस्य सखायं सुदासं जगाम । मत्स्यास इव जले निहिता मत्स्या इव निशिता नियंत्रिता अपि भृगवो द्रुह्यवश्च योधाश्च सुदासस्तुर्वशस्य च श्रुष्टिमाशुप्राप्तिं चक्रुः । विषूचोर्विष्वगंचतोरुभयोर्मध्ये सखा सुदासश्चेंद्रः सखायं सुदासमतरत् । अतारयत् । तुर्वशं चावधीदित्यर्थः । यद्वा यक्षुर्यज्ञशीलः पुरोळाः पुरोदाता तुर्वशो नाम राजासीत् । तेन मत्स्यासो मत्स्यजनपदा निशिता बाधिता आसन् । अपि च भृगवो द्रुह्यवश्च श्रुष्टिं सुखं तुर्वशस्य चक्रुः । विषूचोर्विष्वगंचतोरुभयोर्मध्ये सखा तुर्वशस्य सखेंद्रः सखायं राजानमतरत् । अतारयत् ॥

॥ अथ सप्तमी ॥

आ पक्थासो भलानसो भनंतालिनासो विषाणिनः शिवासः ।
आ योऽनयत्सधमा आर्यस्य गव्या तृत्सुभ्यो अजगन्युधा नृन् ॥ ७ ॥

आ । पक्थासः । भलानसः । भनंत । आ । अलिनासः । विषाणिनः । शिवासः ।
आ । यः । अनयत् । सधऽमाः । आर्यस्य । गव्या । तृत्सुऽभ्यः । अजगन् । युधा । नृन् ॥ ७ ॥

पक्थासः पक्था हविषां पाचका भलानसो भद्रमुखाः । भलेति भद्रवाची । अलिनासोऽलिनाः । तपोभिरप्रवृद्धा इत्यर्थः । विषाणिनः कंडूयनार्थं कृष्णविषाणहस्ताः । दीक्षिता इत्यर्थः । शिवासः शिवा यागादिना सर्वस्य लोकस्य शिवकराः । यागेन हि शिवं भवति लोकस्य । आभनंत । अभिष्टुवंति तमिंद्रं ॥ भनतिः शब्दकर्मा नौति भनतीति शब्दकर्मसु पाठात् ॥ य इंद्रः सधमाः । सोमपानेन सह माद्यतीति सधमादः । सधमाद एव सधमाः । आर्यस्य कर्मशीलस्य

गव्या गोसंघान् तृत्सुभ्यो हिंसकेभ्य आनयत्। अजगन् अजगत् स्वयं च गोसंघान् लेभे। युधा युद्धेन तान्नॄन् शत्रून् जघान चेति शेषः ॥

॥ अथाष्टमी ॥

दुराध्यो३ अदितिं स्रेवयंतोऽचेतसो वि जगृभ्रे परुष्णीं।
महाविव्यक्पृथिवीं पत्यमानः पशुष्कविरशयच्चायमानः ॥८॥
दुःऽआध्यः। अदितिं। स्रेवयंतः। अचेतसः। वि। जगृभ्रे। परुष्णीं।
मह्ना। अविव्यक्। पृथिवीं। पत्यमानः। पशुः। कविः। अशयत्। चायमानः ॥८॥

दुराध्यो दुष्टाभिसंधयोऽचेतसो मंदमतयः सुदासः शत्रवोऽदितिमदीनां परुष्णीं नदीं स्रेवयंतो विजगृभ्रे। वियहः कूलभेदः। तमकुर्वन्। परुष्ण्याः कूलं बिभिदुरित्यर्थः। स सुदासो महेंद्रप्रसादलब्धेन महिम्ना पृथिवीमविव्यक्। तदेव व्याप्नोत्। न पुनरुदकेनाबाध्यत। ततः सुदासः शत्रुश्चायमानश्चयमानस्य पुत्रः कविः कविनामा पत्यमानः पाल्यमानः पशुर्यागे संज्ञप्तः पशुरिवाशयत्। अशेत। सुदासा निहत इत्यर्थः ॥

॥ अथ नवमी ॥

ईयुरर्थं न न्यर्थं परुष्णीमाशुश्चनेदभिपित्वं जगाम।
सुदास इंद्रः सुतुकाँ अमित्रानरंधयन्मानुषे वध्रिवाचः ॥९॥
ईयुः। अर्थं। न। निऽअर्थं। परुष्णीं। आशुः। चन। इत्। अभिऽपित्वं। जगाम।
सुऽदासे। इंद्रः। सुऽतुकान्। अमित्रान्। अरंधयत्। मानुषे। वध्रिऽवाचः ॥९॥

अथेंद्रः परुष्ण्या विच्छिन्नानि पर्वाणि संदधे। ततः परुष्ण्या आपो यथापूर्वमर्थं गंतव्यमेव प्रवणदेशं प्रति परुष्णीमीयुः। आययां चक्रुः ॥ इण् गताविति धातोरंतर्भावितण्यर्थात् लिटीयुरिति। अतो द्विकर्मकमाख्यातं ॥ न्यर्थमगंतव्यं परुष्ण्याः पार्श्वयोः स्थितं निम्नं देशं प्रति परुष्णीं नेयुः। आशुश्चन राज्ञः सुदासोऽश्वोऽप्यभिपित्वमभिप्राप्तव्यमेव जगाम। इंद्रश्च सुदासे राज्ञे मानुषे लोके वध्रिवाचो जल्पकानमित्रान् शत्रून् सुतुकान् सुतोकान् ॥ तुक् तोकमित्यपत्यनामसु पाठात् ॥ अरंधयत्। वशमानयत् ॥

॥ अथ दशमी ॥

ईयुर्गावो न यवसादगोपा यथाकृतमभि मित्रं चितासः ।
पृश्निगावः पृश्निनिप्रेषितासः श्रुष्टिं चक्रुर्नियुतो रंतयश्च ॥१०॥

ईयुः । गावः । नः । यवसात् । अगोपाः । यथाऽकृतं । अभि । मित्रं । चितासः ।
पृश्निऽगावः । पृश्निऽनिप्रेषितासः । श्रुष्टिं । चक्रुः । निऽयुतः । रंतयः । च ॥१०॥

यदेंद्रः सुदासो रक्षणार्थमागच्छति तदा पृश्निनिप्रेषितासः पृश्निनिप्रेषिताः पृश्न्या मात्रा नितरां प्रहिताश्चितासः संहता जानंतो वा पृश्निगावः । पृश्निवर्णा गावोऽश्वा येषां ते पृश्निगावो मरुतो यथाकृतमिंद्रस्य साहाय्यं करवामेति यथा पूर्वं समयः कृतस्तं समयमनतिक्रम्य मित्रमिंद्रं यवसात् ॥ निमित्तार्थे पंचमी ॥ यवसं निमित्तीकृत्यागोपा गोपालेनारक्षिता गावो न गाव इवाभीयुः । अभिजग्मुः । रंतयो रममाणा नियुतो मरुतामश्वाश्च श्रुष्टिं शीघ्रप्राप्तिं चक्रुः । तस्मिन्युद्धे मरुत इंद्रं साहाय्यार्थमभ्यगच्छन्नित्यर्थः ॥

॥ इति पंचमस्य द्वितीये पंचविंशो वर्गः ॥

॥ अथैकादशी ॥

एकं च यो विंशतिं च श्रवस्या वैकर्णयोर्जनान्राजा न्यस्तः ।
दस्मो न सद्मन्नि शिशाति बर्हिः शूरः सर्गमकृणोदिंद्र एषां ॥११॥

एकं । च । यः । विंशतिं । च । श्रवस्या । वैकर्णयोः । जनान् । राजा । नि । अस्तरित्यस्तः ।
दस्मः । न । सद्मन् । नि । शिशाति । बर्हिः । शूरः । सर्गं । अकृणोत् । इंद्रः । एषां ॥११॥

यो सुदासो राजा श्रवस्या यशस इच्छयान्नेच्छया वा परुष्णयाः पार्श्वस्थयोर्वैकर्णयोर्जनपदयोर्विद्यमानानेकं च विंशतिं च जनान् न्यस्तः आत्मनाहन् स राजा दस्मो न दर्शनीयो युवाध्वर्युरिव सद्मन्यज्ञगृहे बर्हिर्यस्मिन्युद्धे सपत्नान्नि शिशाति नितरां लुनाति तस्मिन्युद्धे शूर इंद्र एषां मरुतां सर्गं प्रसवमकृणोत् सुदासः साहाय्यार्थमकरोत् ॥

॥ अथ द्वादशी ॥

अध श्रुतं कवषं वृद्धमप्स्वनु द्रुह्युं नि वृणग्वज्रबाहुः ।
वृणाना अत्र सख्याय सख्यं त्वायंतो ये अमदन्ननु त्वा ॥१२॥

अर्ध । श्रुतं । कवषं । वृद्धं । अप्ऽसु । अनुं । द्रुह्युं । नि । वृणक् । वज्रऽबाहुः ।
वृणानाः । अत्रं । सख्याय । सख्यं । त्वाऽयंतः । ये । अमंदन् । अनुं । त्वा ॥१२॥

अधापि च वज्रबाहुरिंद्रः श्रुतं कवषं च वृद्धं च त्रीन् तथा द्रुह्युमनु आनुपूर्व्येणाप्सूदकेषु निवृणक् । न्यमज्जयदित्यर्थः । अत्रास्मिन्नवसरे ये त्वायंतस्त्वत्कामास्त्वा त्वामन्वमदन् अस्तुवन् ते सखायः सख्याय सख्यार्थं त्वां वृणानाः सख्यं लेभिर इति शेषः ॥

॥ अथ त्रयोदशी ॥

वि सद्यो विश्वा दृंहितान्येषामिंद्रः पुरः सहसा सप्त दर्दः ।
व्यानवस्य तृत्सवे गयं भाग्जेष्म पूरुं विदथे मृध्रवाचं ॥१३॥

वि । सद्यः । विश्वा । दृंहितानि । एषां । इंद्रः । पुरः । सहसा । सप्त । दर्दरिति दर्दः ।
वि । आनवस्य । तृत्सवे । गयं । भाक् । जेष्म । पूरुं । विदथे । मृध्रऽवाचं ॥१३॥

एषां कवषादीनां विश्वा विश्वानि दृंहितानि दृढानि दुर्गाणि पुरो नगरीश्च तद्रक्षासाधनभूतान् सप्त प्रकारांश्चेंद्रः सहसा बलेन सद्य एव विदर्दः । विदारयामास । अपि चानवस्यानोः संबंधिनो बलस्यानोः पुत्रस्य वा गयं गृहं धनं वा तृत्सवे तृत्सुनामकाय राज्ञे तृत्सूनां गणाय वा विभाक् । व्यभजत् । अदादित्यर्थः । इत्थमिंद्रं स्तुवंतो वयं विदथे युद्धे मृध्रवाचं बाधवाचं पूरुं मनुष्यं जेष्म । जयेम ॥

॥ अथ चतुर्दशी ॥

नि गव्यवोऽनवो द्रुह्यवश्च षष्टिः शता सुषुपुः षट् सहस्रा ।
षष्टिर्वीरासो अधि षट् दुवोयु विश्वेदिंद्रस्य वीर्या कृतानि ॥१४॥

नि । गव्यवः । अनवः । द्रुह्यवः । च । षष्टिः । शता । सुसुपुः । षट् । सहस्रा ।
षष्टिः । वीरासः । अधि । षट् । दुवःऽयु । विश्वा । इत् । इंद्रस्य । वीर्या । कृतानि ॥१४॥

गव्यवो गोकामा अनवोऽनोः संबंधिनो द्रुह्यवो द्रुह्योः संबंधिनश्च वीरासो वीराः षष्टिः शता शतानि । सहस्राणीत्यर्थः । षट् सहस्रा सहस्राणि च षष्टिश्चाधि षडधिकाः षट् दुवोयु दुवोयुवे ॥ चतुर्थी लुक् ॥ परिचरणकामाय सुदासे ॥ नमस्यति दुवस्यतीति परिचरणकर्मसु पाठात् ॥ नि सुसुपुः । नितरां शेरते ।

निहता इत्यर्थः । तान्येतानि विश्वा विश्वानि कृतानि कार्याणींद्रस्येत् इंद्रस्यैव वीर्या वीर्याणीति ॥

॥ अथ पंचदशी ॥

इंद्रेणैते तृत्सवो वेविषाणा आपो न सृष्टा अधवंत नीचीः ।
दुर्मित्रासः प्रकलविन्मिमाना जहुर्विश्वानि भोजना सुदासे ॥ १५ ॥

इंद्रेण । एते । तृत्सवः । वेविषाणाः । आपः । न । सृष्टाः । अधवंत । नीचीः ।
दुःऽमित्रासः । प्रकलऽवित् । मिमानाः । जहुः । विश्वानि । भोजना । सुऽदासे ॥ १५ ॥

कदाचिदिंद्रेण रक्षिता अप्यन्यदा तेनैव बाध्यंते । एते तृत्सवो दुर्मित्रासो दुष्टमित्राः प्रकलविदजानंत इंद्रेण वेविषाणा युद्धार्थं संगताः सृष्टाः पलायनार्थमुद्युक्ता नीची नीचीना आपो न आप इवाधवंत । अधावंत । ततो मिमानाः सुदासा बाध्यमाना विश्वा विश्वानि भोजना भोग्यानि धनानि सुदासे राज्ञे जहुः ॥

॥ इति पंचमस्य द्वितीये षड्विंशो वर्गः ॥

॥ अथ षोडशी ॥

अर्धं वीरस्य शृतपामनिंद्रं परा शर्धंतं नुनुदे अभि क्षां ।
इंद्रो मन्युं मन्युम्यो मिमाय भेजे पथो वर्तनिं पत्यमानः ॥ १६ ॥

अर्धं । वीरस्य । शृतऽपां । अनिंद्रं । परा । शर्धंतं । नुनुदे । अभि । क्षां ।
इंद्रः । मन्युं । मन्युऽम्यः । मिमाय । भेजे । पथः । वर्तनिं । पत्यमानः ॥ १६ ॥

इंद्रोऽभि क्षां भूमिमभि । भूम्यामित्यर्थः । वीरस्य वीर्ययुक्तस्य सुदासोऽर्धं हिंसकं ॥ अर्धहिंसाकर्मणोऽर्धशब्दस्य निष्पत्तिः ॥ अनिंद्रं । यस्य बुद्धाविंद्रो नास्त्यसावनिंद्रः । तं । इंद्रमगणयंतमित्यर्थः । शृतपां शृतस्य क्षीरादेर्हविषः पातारं शर्धंतमुत्सहमानं परानुनुदे । किंच मन्युम्यो मन्युकर्तुर्मन्युना मिनतो हिंसतो वा शत्रोर्मन्युं क्रोधं मिमाय । बबाधे । अथ सुदासः शत्रुः पथो मार्गान् पत्यमानो गच्छन् वर्तनिं पलायनमार्गं भेजे । प्राप ॥

॥ अथ सप्तदशी ॥

आध्रेण चित्तद्वेकं चकार सिंह्यं चित्पेत्वेना जघान ।
अव स्रक्तीर्वेश्यावृश्चदिंद्रः प्रायच्छद्विश्वा भोजना सुदासे ॥ १७ ॥

आध्रेण । चित् । तत् । ऊं इति । एकं । चकार । सिंह्यं । चित् । पेत्वेन । जघान ।

अव । स्रक्तीः । वेश्या । अवृश्चत् । इंद्रः । प्र । अयच्छत् । विश्वा । भोजना । सुऽदासे ॥१७॥

इंद्रस्तत्तदाध्रेण चित् दरिद्रेणापि सुदासैकं मुख्यं दानकर्म चकार । कारयामास । सिंह्यं चित् । प्रवयाः सिंहः सिंह्यः । तमपि पेत्वेन छागेन जघान । घातयामास । वेश्या । वेशी सूची । तया स्रक्तीर्यूपादेरश्रीनवावृश्चत् । अववृक्तवान् । वेश्यादेः कृत्यं सूच्यैवाकरोदित्यर्थः । तान्येतानि त्रीणि कर्माण्यसंभावितानीति नाशंकनीयानींद्रस्य महिम्नोऽधिकत्वात् । विश्वा विश्वानि भोजना भोजनानि भोग्यानि धनानि सुदासे राज्ञे प्रायच्छत् । अदाच्च ॥

॥ अथाष्टादशी ॥

शश्वंतो हि शत्रवो रारधुष्टे भेदस्य चिच्छर्धतो विंद रंधिं ।

मर्तां एनः स्तुवतो यः कृणोति तिग्मं तस्मिन्नि जहि वज्रमिंद्र ॥१८॥

शश्वंतः । हि । शत्रवः । ररधुः । ते । भेदस्य । चित् । शर्धतः । विंद । रंधिं ।

मर्तान् । एनः । स्तुवतः । यः । कृणोति । तिग्मं । तस्मिन् । नि । जहि । वज्रं । इंद्र ॥१८॥

हे इंद्र ते तव शत्रवोऽरयः शश्वंतो बहवो ररधुः । वशमीयुः । चिदपि च शर्धत उत्सहमानस्य भेदस्य । भिनत्ति मर्यादा इति भेदो नास्तिकः । तस्य । यद्वा भेदो नाम सुदासः शत्रुः कश्चित् । तस्येत्यर्थः । रंधिं वशीकरं विंद । लभ । यो भेदः स्तुवतस्त्वां स्तुवतो मर्तान्मर्त्यान् प्रत्येनः पापं कृणोति करोति तस्मिन् भेदे तिग्मं निशितं योद्धारमुत्साहयंतं । तथा च यास्कः । तिग्मं तेजतेरुत्साहकर्मणः । नि० १०.६. । इति । वज्रं । वजति गच्छत्येव शत्रुं न प्रतिहन्यत इति वज्रः । तं ॥ वज्रशब्दो वजेर्ऋज्रेंद्राग्रवज्रविप्रेत्यादिना रन्प्रत्ययांतो निपातितः ॥ तं जहि । वज्रेण भेदं प्रहरेत्यर्थः ॥

॥ अथैकोनविंशी ॥

आवदिंद्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत् ।

अजासश्च शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरश्व्यानि ॥१९॥

आवत् । इंद्रं । यमुना । तृत्सवः । च । प्र । अत्र । भेदं । सर्वऽताता । मुषायत् ।

अजासः । च । शिग्रवः । यक्षवः । च । बलिं । शीर्षाणि । जभ्रुः । अश्व्यानि ॥१९॥

अत्रास्मिन् सर्वताता सर्वताती युद्धे य इंद्रो भेदं नास्तिकं भेदनामकं वा सुदासः शत्रुं प्रमुषायत् प्रामुष्णात्। अवधीदित्यर्थः। तमिंद्रं यमुनावत्। अतोषयत्। तत्तीरवासी जनः सर्वोऽप्यतोषयदित्यर्थः। तृत्सवस्तृत्सोः पुरुषाश्चावन्। आवदित्येकवचनं बहुवचनांततया विपरिणतं सद्व संबध्यते। किंचाजासोऽजा जनपदाः शिग्रवो जनपदा यक्षवश्च जनपदा अश्व्यान्यश्वसंबंधीनि शीर्षाणि शिरांसि। युद्धे हतानामश्वानां शिरांसीत्यर्थः। बलिमुपहारं तस्मा इंद्रायोपजभ्रुः। उपजह्रुः। यद्वाश्व्यानि शीर्षाणि युद्धे गृहीतान्मुख्यानश्वानिंद्रायोपहारं जह्रुरित्यर्थः॥

॥ अथ विंशी ॥

न तं इंद्र सुमतयो न रायः संचक्षे पूर्वा उषसो न नूत्नाः।
देवकं चिन्मान्यमानं जघंथाव त्मना बृहतः शंबरं भेत् ॥२०॥
न। ते। इंद्र। सुऽमतयः। न। रायः। संऽचक्षे। पूर्वाः। उषसः। न। नूत्नाः।
देवकं। चित्। मान्यमानं। जघंथ। अव। त्मना। बृहतः। शंबरं। भेत् ॥२०॥

हे इंद्र ते तव पूर्वाः पुरातनाः सुमतयः शोभनमतयो रायो धनानि चोषसो न उषस इव न संचक्षे संख्यातुं न शक्याः। न नूत्ना नूतनाश्च सुमतयो रायश्च न संचक्षे। किंच त्वं मान्यमानं मन्यमानस्य पुत्रं देवकं देवकनामानं शत्रुं जघंथ। अवधीः। त्मना स्वयमेव बृहतो महतः शैलात् शंबरं चावभेत्। अवाभैत्सीरिति॥

॥ इति पंचमस्य द्वितीये सप्तविंशो वर्गः॥

॥ अथैकविंशी ॥

प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः।
न ते भोजस्य सख्यं मृषंताधा सूरिभ्यः सुदिना व्युच्छान् ॥२१॥
प्र। ये। गृहात्। अममदुः। त्वाऽया। पराऽशरः। शतऽयातुः। वसिष्ठः।
न। ते। भोजस्य। सख्यं। मृषंत। अध। सूरिऽभ्यः। सुऽदिना। वि। उच्छान् ॥२१॥

हे इंद्र पराशरः शतयातुर्बहुरक्षाः। बहूनि रक्षांसि बाधितुं यं कामयंते स शतयातुर्बहूनां रक्षसां शातयिता वा। शक्तिर्वसिष्ठश्चैवमादयो ये ऋषयस्त्वाया

त्वदिच्छया गृहाद्गृहं प्राप्य ॥ ल्यब्लोपे द्वितीयार्थे पंचमी । पा० २. ३. २८. १. ॥ यद्वा गृहात् गृहे ॥ सप्तम्यर्थे पंचमी ॥ प्राममदुः त्वां प्रतुष्टुवुः प्रकर्षेण तर्पितवंतो वा ते पराशरप्रभृतयो भोजस्य भोजकस्य पालस्य ते तव सख्यं सख्युः कर्म स्तोत्रं यजनं वा न मृषंति । न विस्मरंति । मृष मर्षे । मर्षो मर्षणं । तन्न कुर्वंतीत्यर्थः । यतो न विस्मरंत्यधातो हेतोः सूरिभ्यः सूरीणां स्तोतृणामेषां ॥ अथ विभक्तिव्यत्ययः ॥ सुदिना सुदिनानि व्युच्छान् । व्युच्छंति । निवसंति । उपगच्छंतीत्यर्थः ॥

॥ अथ द्वाविंशी ॥

द्वे नप्तुर्देववतः शते गोर्द्वा रथा वधूमंता सुदासः ।

अर्हन्नग्ने पैजवनस्य दानं होतेव सद्म पर्येमि रेभन् ॥२२॥

द्वे इति । नप्तुः । देवऽवतः । शते इति । गोः । द्वा । रथा । वधूऽमंता । सुऽदासः ।

अर्हन् । अग्ने । पैजऽवनस्य । दानं । होताऽइव । सद्म । परि । एमि । रेभन् ॥२२॥

देववतो राज्ञो नप्तुः पौत्रस्य पैजवनस्य पिजवनपुत्रस्य सुदासो राज्ञो गोर्गवां द्वे शते वधूमंता वधूसंयुक्तौ द्वा द्वौ रथा रथौ च देयं दानं दानभूतान् रेभन् इंद्रं स्तुवन् अत एवार्हन्योग्योऽहं वसिष्ठो हे अग्ने सद्म यज्ञगृहं होतेव वषट्कर्तेव पर्येमि । अत्राग्नेः संबोधनं सर्वदेवमुख्यत्वप्रतिपादनार्थं न तु देवतात्वज्ञापनार्थमतद्देवताकत्वादस्य सूक्तस्य ॥

॥ अथ त्रयोविंशी ॥

चत्वारो मा पैजवनस्य दानाः स्मद्दिष्टयः कृशनिनो निरेके ।

ऋज्रासो मा पृथिविष्ठाः सुदासस्तोकं तोकाय श्रवसे वहंति ॥२३॥

चत्वारः । मा । पैजऽवनस्य । दानाः । स्मत्ऽदिष्टयः । कृशनिनः । निऽरेके ।

ऋज्रासः । मा । पृथिविऽस्थाः । सुऽदासः । तोकं । तोकाय । श्रवसे । वहंति ॥२३॥

पैजवनस्य पिजवनपुत्रस्य सुदासो राज्ञः स्मद्दिष्टयः प्रशस्तातिसर्जनश्रद्धादिदानांगयुक्ताः कृशनिनो हिरण्यालंकारवंतो निरेके दुर्गतौ सत्यामृज्रास ऋजुगामिनः पृथिविष्ठाः पृथिव्यां सुप्रतिष्ठिता दाना देयभूताश्चत्वारोऽश्वास्तोकं पुत्रवत्पालनीयं मां वसिष्ठं रथे स्थितं तोकाय तोकस्य पुत्रस्य ॥ षष्ठ्यर्थे चतुर्थी ॥ श्रवसेऽन्नाय यशसे वा वहंति । पुनर्मेति पूरणः ॥

॥ अथ चतुर्विंशी ॥

यस्य श्रवो रोदसी अंतरुर्वी शीर्ष्णेशीर्ष्णे विबभाजा विभक्ता।
सप्तेदिंद्रं न स्रवतो गृणंति नि युध्यामधिमशिशादभीके ॥२४॥
यस्य। श्रवः। रोदसी इति। अंतः। उर्वी इति। शीर्ष्णेऽशीर्ष्णे। विऽबभाज। विऽभक्ता।
सप्त। इत्। इंद्रं। न। स्रवतः। गृणंति। नि। युध्यामधिं। अशिशात्। अभीके ॥२४॥

यस्य सुदासः श्रवो यश उर्वी विस्तीर्णे रोदसी द्यावापृथिव्यावंतः। विस्तीर्णयोर्द्यावापृथिव्योर्मध्ये वर्तत इत्यर्थः। यश्च सुदा विभक्ता धनस्य प्रदाता शीर्ष्णेशीर्ष्णे श्रेष्ठाय श्रेष्ठाय विबभाज धनं प्रददौ तं सुदासं सप्तेत् सप्तैव लोका इंद्रं न इंद्रमिव गृणंति। स्तुवंति। किंच स्रवतो नद्योऽभीके युद्धे युध्यामधिं युध्यामधिनामकं सपत्नं न्यशिशात्। न्यहन् ॥

॥ अथ पंचविंशी ॥

इमं नरो मरुतः सश्चतानु दिवोदासं न पितरं सुदासः।
अविष्टना पैजवनस्य केतं दूणाशं क्षत्रमजरं दुवोयु ॥२५॥
इमं। नरः। मरुतः। सश्चत। अनु। दिवःऽदासं। न। पितरं। सुऽदासः।
अविष्टन। पैजऽवनस्य। केतं। दुःऽनशं। क्षत्रं। अजरं। दुवःऽयु ॥२५॥

हे नरो नेतारो मरुत इमं सुदासं राजानं सुदासो राज्ञः पितरं दिवोदासं न दिवोदासमिव। दिवोदास इति पिजवनस्यैव नामांतरं। अनुसश्चत। अनुसेवध्वं। किंच दुवोयु परिचरणकामस्य॥ षष्ठ्या लुक्॥ पैजवनस्य पिजवनपुत्रस्य सुदासः केतं मंत्रं गृहं वाविष्टन। रक्षत। अपि चास्य सुदासः क्षत्रं बलं दूणाशं दुर्नशमविनाश्यजरमशिथिलं चास्तु ॥

॥ इति पंचमस्य द्वितीयेऽष्टाविंशो वर्गः ॥

यस्तिग्मशृंग इत्येकादशर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैंद्रं। तथा चानुक्रांतं। यस्तिग्मशृंग एकादशेति॥ आभिप्लविके पंचमेऽहन्येतन्निविद्धानं। सूत्रितं च। कया शुभा यस्तिग्मशृंग इति माध्यंदिनः। आ० ७.७.। इति ॥ विषुवति निष्केवल्यशस्त्रेऽप्येतत्सूक्तं। सूत्रितं च। यस्तिग्मशृंगोऽभि त्यं मेषं। आ० ८.६.।

इति ॥ महाव्रते निष्केवल्येऽप्येतत्सूक्तं । सूचितं च । यस्तिग्मशृंगो वृषभो न भीम उग्रो जज्ञे वीर्याय स्वधावान् । ऐ० आ० ५.४.। इति ॥ आयुष्कामेष्ट्यां मा ते अस्यामितींद्रस्य चातुर्याज्या । सूचितं च । मा ते अस्यां सहसावन्परिष्टौ पाहि नो अग्ने पायुभिः । आ० २.१०.। इति ॥

॥ तत्र प्रथमा ॥

यस्तिग्मशृंगो वृषभो न भीम एकः कृष्टीश्च्यावयति प्र विश्वाः ।
यः शश्वतो अदाशुषो गयस्य प्रयंतासि सुष्वितराय वेदः ॥१॥

यः । तिग्मऽशृंगः । वृषभः । न । भीमः । एकः । कृष्टीः । च्यवयति । प्र । विश्वाः ।
यः । शश्वतः । अदाशुषः । गयस्य । प्रऽयंता । असि । सुस्विऽतराय । वेदः ॥१॥

य इंद्रस्तिग्मशृंगस्तीक्ष्णशृंगो वृषभो न वृषभ इव भीमो भयंकरः सन् एकोऽसहाय एव विश्वाः सर्वान् कृष्टीः शत्रुजनान् स्थानात् प्रच्यावयति । यश्चेंद्रोऽदाशुषोऽयजमानस्य शश्वतो बहोर्गयस्य गृहस्य धनस्य वापहर्ता भवतीति शेषः । हे इंद्र स त्वं सुष्वितरायातिशयेन सोमाभिषवं कुर्वते जनाय वेदो धनं प्रयंता प्रदातासि ॥ तृनंतत्वादत्र षष्ठ्या अभावः । असीत्यस्याख्यातस्यानुदात्तत्वाद्यद्वृत्तयोगाच्चानुदात्तत्वासंभवात् यद्वृत्तयुक्तमाख्यातांतरमध्याहृत्य योजना कृता ॥

॥ अथ द्वितीया ॥

त्वं ह त्यदिंद्र कुत्समावः शुश्रूषमाणस्तन्वा समर्ये ।
दासं यच्छुष्णं कुयवं न्यस्मा अरंधय आर्जुनेयाय शिक्षन् ॥२॥

त्वं । ह । त्यत् । इंद्र । कुत्सं । आवः । शुश्रूषमानः । तन्वा । सऽमर्ये ।
दासं । यत् । शुष्णं । कुयवं । नि । अस्मै । अरंधयः । आर्जुनेयाय । शिक्षन् ॥२॥

हे इंद्र त्वं ह त्वं खलु त्यत्तदा तन्वा शरीरेण शुश्रूषमाण उपचरन् समर्ये मर्यैर्मर्त्यैर्योद्धृभिः सहिते युद्धे कुत्समावः । अरक्षः । कदेत्यत्राह । यद्यदार्जुनेयायार्जुन्याः पुत्रायास्मै कुत्साय शिक्षन् धनं प्रयच्छन् दासं दासनामकमसुरं शुष्णं च कुयवं च न्यरंधयः नितरां वशमानयः ॥

॥ अथ तृतीया ॥

त्वं धृष्णो धृषता वीतहव्यं प्रावो विश्वाभिरूतिभिः सुदासं ।
प्र पौरुकुत्सिं त्रसदस्युमावः क्षेत्रसाता वृत्रहत्येषु पूरुं ॥३॥
त्वं। धृष्णो इति। धृषता। वीतऽहव्यं। प्र। आवः। विश्वाभिः। ऊतिऽभिः। सुऽदासं।
प्र। पौरुऽकुत्सिं। त्रसदस्युं। आवः। क्षेत्रऽसाता। वृत्रऽहत्येषु। पूरुं ॥३॥

हे धृष्णो शत्रूणां धर्षकेंद्र धृषता धर्षकेण वज्रेण बलेन वा वीतहव्यं दत्तहविष्कं प्रजनितहविष्कं वा सुदासं राजानं विश्वाभिः सर्वाभिरूतिभी रक्षाभिः प्रावः। प्रकर्षेणारक्षः। किंच वृत्रहत्येषु युद्धेषु क्षेत्रसाता क्षेत्रसातौ क्षेत्रस्य भूमेर्भजने निमित्ते पौरुकुत्सिं पुरुकुत्सस्यापत्यं त्रसदस्युं पूरुं च प्रावः ॥

॥ अथ चतुर्थी ॥

त्वं नृभिर्नृमणो देववीतौ भूरीणि वृत्रा हर्यश्व हंसि।
त्वं नि दस्युं चुमुरिं धुनिं चास्वापयो दभीतये सुहंतु ॥४॥
त्वं। नृऽभिः। नृऽमनः। देवऽवीतौ। भूरीणि। वृत्रा। हरिऽअश्व। हंसि।
त्वं। नि। दस्युं। चुमुरिं। धुनिं। च। अस्वापयः। दभीतये। सुऽहंतु ॥४॥

हे नृमणो नृभिर्यज्ञानां नेतृभिः स्तोतृभिर्मननीय स्तोतव्येंद्र। नृषु मनो यस्येति बहुव्रीहिर्वा। देववीतौ यज्ञे क्रियमाणे सति संग्रामे वा। देवा विजिगीषवो यस्मिन् वियंति गच्छंतीति संग्रामो देववीतिः। नृभिर्मरुद्भिः सह भूरीणि बहूनि वृत्रा वृत्राणि शत्रून् हंसि। मारितवानसि। किंच हे हर्यश्वेंद्र त्वं दभीतये दभीतिनामकाय राजर्षये। तदर्थमित्यर्थः। दस्युं चुमुरिं च धुनिं च सुहंतु सुहंतुना वज्रेण नि नितरामस्वापयः। मारितवानसीत्यर्थः ॥

॥ अथ पंचमी ॥

तव च्यौत्नानि वज्रहस्त तानि नव यत्पुरो नवतिं च सद्यः।
निवेशने शततमाविवेषीरहन् च वृत्रं नमुचिमुताहन् ॥५॥
तव। च्यौत्नानि। वज्रऽहस्त। तानि। नव। यत्। पुरः। नवतिं। च। सद्यः।
निऽवेशने। शतऽतमा। अविवेषीः। अहन्। च। वृत्रं। नमुचिं। उत। अहन् ॥५॥

हे वज्रहस्त तव च्यौत्नानि बलानि तानि तादृशानि। यद्यदा त्वं शंबरस्य नव नवतिं च पुरः सद्यो युगपदेव विदारितवानसीति शेषः। तदा निवेशने निवेशनार्थं शततमा शततमीं पुरमविवेषीः। व्याप्नोः। वृत्रं चाहन्। उतापि च नमुचिमहन् ॥

॥ इति पंचमस्य द्वितीय एकोनविंशो वर्गः ॥

॥ अथ षष्ठी ॥

सना॒ ता त॑ इंद्र॒ भोज॑नानि रा॒तह॑व्याय दा॒शुषे॑ सु॒दासे॑।

वृष्णे॑ ते॒ हरी॒ वृष॑णा युनज्मि॒ व्यंतु॒ ब्रह्मा॑णि पुरुशाक॒ वाजं॑ ॥६॥

सना॑। ता। ते॒। इं॒द्र॒। भोज॑नानि। रा॒तऽह॑व्याय। दा॒शुषे॑। सु॒ऽदासे॑।

वृष्णे॑। ते॒। हरी॒ इति॑। वृष॑णा। यु॒न॒ज्मि॒। व्यंतु॑। ब्रह्मा॑णि। पु॒रु॒ऽशा॒क॒। वाजं॑ ॥६॥

हे इंद्र ते तव रातहव्याय दत्तहव्याय दाशुषे यजमानाय सुदासे ता तानि त्वया दत्तानि भोजनानि भोग्यानि धनानि सना सनानि सनातनानि बभूवुरिति शेषः। हे पुरुशाक बहुकर्मन्निंद्र वृष्णे कामानां वर्षित्रे ते तुभ्यं। त्वामानेतुमित्यर्थः। वृषणा वृषणौ हरी अश्वौ युनज्मि। रथे योजयामि। ब्रह्माण्यस्मदीयानि स्तोत्राणि वाजं बलिनं त्वां व्यंतु। गच्छंतु ॥

॥ अथ सप्तमी ॥

मा ते॑ अ॒स्यां स॑हसाव॒न्परि॑ष्टाव॒घाय॑ भूम हरिवः परा॒दै।

त्राय॑स्व नोऽवृ॒केभि॒र्वरू॑थै॒स्तव॑ प्रि॒यासः॑ सू॒रिषु॑ स्याम ॥७॥

मा। ते॒। अ॒स्यां। स॒ह॒सा॒ऽव॒न्। परि॑ष्टौ। अ॒घाय॑। भू॒म॒। ह॒रि॒ऽवः॒। प॒रा॒ऽदै।

त्राय॑स्व। नः॒। अ॒वृ॒केभिः॑। वरू॑थैः। तव॑। प्रि॒यासः॑। सू॒रिषु॑। स्या॒म॒ ॥७॥

हे सहसावन् बलवन् हरिवो हरिवन्निंद्र ते तवास्यां स्तोत्रेणास्माभिः क्रियमाणायां परिष्टावन्वेषणायां परादै परादानायाघायाहंत्रे वयं मा भूम। किंच नोऽस्मानवृकेभिरबाधैर्वरूथैः। वारयंत्युपद्रवेभ्य इति वरूथानि रक्षणानि। तैस्त्रायस्व। पाहि। तव सूरिषु स्तोतृषु मध्ये वयं प्रियासः प्रियाः स्याम। भूयास्म ॥

॥ अथाष्टमी ॥

प्रियास इत्ते मघवन्नभिष्टौ नरो मदेम शरणे सखायः ।
नि तुर्वशं नि याद्वं शिशीह्यतिथिग्वाय शंस्यं करिष्यन् ॥८॥
प्रियासः । इत् । ते । मघऽवन् । अभिष्टौ । नरः । मदेम । शरणे । सखायः ।
नि । तुर्वशं । नि । याद्वं । शिशीहि । अतिथिऽग्वाय । शंस्यं । करिष्यन् ॥८॥

हे मघवन् धनवन्निंद्र ते तवाभिष्टावभ्येषणे नरः स्तोत्राणां नेतारो वयं सखायः समानख्यातयः प्रियासः प्रियाश्च संतः शरण इत् गृह एव मदेम । मोदेम । किंचातिथिग्वाय । पूजयातिथीन् गच्छतीत्यतिथिग्वः । तस्मै सुदासे दिवोदासाय वास्मदीयाय राज्ञे शंस्यं शंसनीयं सुखं करिष्यन् कुर्वन् तुर्वशं राजानं निशिशीहि । वशं कुरु । याद्वं च राजानं निशिशीहीत्यर्थः ॥

॥ अथ नवमी ॥

सद्यश्चिन्नु ते मघवन्नभिष्टौ नरः शंसंत्युक्थशास उक्था ।
ये ते हवेभिर्वि पणींरदाशन्नस्मान्वृणीष्व युज्याय तस्मै ॥९॥
सद्यः । चित् । नु । ते । मघऽवन् । अभिष्टौ । नरः । शंसंति । उक्थऽशासः । उक्था ।
ये । ते । हवेभिः । वि । पणीन् । अदाशन् । अस्मान् । वृणीष्व । युज्याय । तस्मै ॥९॥

हे मघवन् धनवन्निंद्र ते तव नु अद्याभिष्टावभ्येषणे ये नर उक्थशास उक्थानां शंसितार उक्थोक्थानि शस्त्राणि सद्यश्चित् सद्य एव शंसंति । किंच ते तव हवेभिः स्तोत्रैः पणीनप्रदानशीलान् वणिजोऽपि व्यदाशन् । धनानि विशेषेणादापयन्नित्यर्थः । तानस्मान् तस्मै युज्याय सख्याय तत्सख्यमनुवर्तयितुं वृणीष्व । परिगृहाण ॥

॥ अथ दशमी ॥

एते स्तोमा नरां नृतम तुभ्यमस्मद्र्यंचो ददतो मघानि ।
तेषामिंद्र वृत्रहत्ये शिवो भूः सखा च शूरोऽविता च नृणां ॥१०॥
एते । स्तोमाः । नरां । नृऽतम । तुभ्यं । अस्मद्र्यंचः । ददतः । मघानि ।
तेषां । इंद्र । वृत्रऽहत्ये । शिवः । भूः । सखा । च । शूरः । अविता । च । नृणां ॥१०॥

हे नृतम नेतृतमेंद्र तुभ्यं नरां नेतॄणां य एते स्तोमाः संघा मघानि मंहनीयानि हवींषि ददतो ददंतोऽस्मद्र्यंचोऽस्मदभिमुखा अभूवन्निति शेषः । तेषां नृणां वृत्रहत्ये संग्रामे शिवः कल्याणकृत् भूः । भव । सखा च भूः । अविता रक्षिता च भूः ॥

॥ अथैकादशी ॥

नू इंद्र शूर स्तवमान ऊती ब्रह्मजूतस्तन्वा वावृधस्व ।
उप नो वाजान्मिमीह्युप स्तीन्यूयं पात स्वस्तिभिः सदा नः ॥११॥
नु । इंद्र । शूर । स्तवमानः । ऊती । ब्रह्मऽजूतः । तन्वा । ववृधस्व ।
उप । नः । वाजान् । मिमीहि । उप । स्तीन् । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥११॥

हे शूरेंद्र नु अद्य स्तवमानः स्तूयमानो ब्रह्मजूतो ब्रह्मणा स्तोत्रेण प्रेरितस्तन्वा शरीरेण ववृधस्व । अपि च नोऽस्मभ्यं वाजानन्नान्युपमिमीहि । प्रयच्छेत्यर्थः । स्तीन् गृहांश्चोपमिमीहि । स्पष्टमन्यत् ॥

॥ इति पंचमस्य द्वितीये त्रिंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पंचमाष्टके द्वितीयोऽध्यायः समाप्तः ॥

# SARVA'NUKRAMAḤ.

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 1 | 4.1.1 | 3.4.12 | Tvám hy agne sadam it | 20 | Vámadevaḥ. | Agniḥ, 2–4 Agniḥ or Varuṇah. | 1 Ashṭiḥ, 2 Atijagatí, 3 Dhṛitiḥ, 4–20 Trishṭup. | 1 |
| 2 | 4.1.2 | 3.4.16 | Yo martyeshu | 20 | The same. | Agniḥ. | Trishṭup. | 13 |
| 3 | 4.1.3 | 3.4.20 | A' vo rájánam | 16 | ...... | The same. | The same. | 24 |
| 4 | 4.1.4 | 3.4.23 | Kriṇushva | 15 | ...... | Agniḥ (rakshohá). | ...... | 33 |
| 5 | 4.1.5 | 3.5.1 | Vaiśvánaráya | 15 | ...... | Agnir Vaiśvánaraḥ. | ...... | 42 |
| 6 | 4.1.6 | 3.5.4 | Úrddhva ú shu ṇaḥ | 11 | ...... | Agniḥ. | ...... | 50 |
| 7 | 4.1.7 | 3.5.6 | Ayam iha | 11 | ...... | The same. | 1 Jagatí, 2–6 Anushṭup, 7–11 Trishṭup. | 54 |
| 8 | 4.1.8 | 3.5.8 | Dútam vaḥ | 8 | ...... | ...... | Gáyatrí. | 60 |
| 9 | 4.1.9 | 3.5.9 | Agne mṛiḷa | 8 | ...... | ...... | The same. | 62 |
| 10 | 4.1.10 | 3.5.10 | Agne tam adya | 8 | ...... | ...... | 1–3 Padapanktiḥ, 4, 6 and 7 Padapanktiḥ or Ushṇik, 5 Mahápadapanktiḥ, 8 Ushṇik. | 64 |
| 11 | 4.2.1 | 3.5.11 | Bhadram te | 6 | ...... | ...... | Trishṭup. | 68 |
| 12 | 4.2.2 | 3.5.12 | Yas tvám agne | 6 | ...... | ...... | The same. | 71 |
| 13 | 4.2.3 | 3.5.13 | Praty agniḥ | 5 | ...... | Agniḥ or the Lingoktadevatáḥ. | ...... | 73 |
| 14 | 4.2.4 | 3.5.14 | Praty agnir ushasaḥ | 5 | ...... | Agniḥ or the Lingoktadevatáḥ. | ...... | 76 |
| 15 | 4.2.5 | 3.5.15 | Agnir hotá | 10 | ...... | Agniḥ, 7 and 8 Somakaḥ Sáhadevyaḥ, 9 and 10 Aśvinau. | Gáyatrí. | 78 |
| 16 | 4.2.6 | 3.5.17 | A' satyo yátu | 21 | ...... | Indraḥ. | Trishṭup. | 81 |
| 17 | 4.2.7 | 3.5.21 | Tvam mahán | 21 | ...... | The same. | 1 Trishṭup, 15 Ekapadá Viráṭ. | 90 |
| 18 | 4.2.8 | 3.5.25 | Ayam pantháḥ | 13 | Samváda Indra- | Aditi-Vámadevánám. | Trishṭup. | 100 |
| 19 | 4.2.9 | 3.6.1 | Evá tvám | 11 | Vámadevaḥ. | Indraḥ. | The same. | 107 |
| 20 | 4.2.10 | 3.6.3 | A' na indra | 11 | The same. | The same. | ...... | 111 |
| 21 | 4.2.11 | 3.6.5 | A' yátv indraḥ | 11 | ...... | ...... | ...... | 116 |
| 22 | 4.3.1 | 3.6.7 | Yan na indraḥ | 11 | ...... | ...... | ...... | 121 |
| 23 | 4.3.2 | 3.6.9 | Kathá mahám | 11 | ...... | Indraḥ, 8–10 Indraḥ or Ṛitadevatáḥ. | ...... | 125 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 24 | 4.3.3 | 3.6.11 | Ká sushṭutiḥ | 11 | Vámadevaḥ. | Indraḥ. | Trishṭup, 10 Anushṭup. | 130 |
| 25 | 4.3.4 | 3.6.13 | Ko adya | 8 | The same. | The same. | Trishṭup. | 135 |
| 26 | 4.3.5 | 3.6.15 | Aham manuḥ | 7 | 1–3 Vámadevaḥ or Indraḥ, 4–7 Vámadevaḥ. | 1–3 Indraḥ or Paramátmá, 4–7 S'yenastutiḥ. | The same. | 138 |
| 27 | 4.3.6 | 3.6.16 | Garbhe nu | 5 | Vámadevaḥ. | 1–4 S'yenaḥ, 5 S'yenaḥ or Indraḥ. | Trishṭup, 5 S'akvarí. | 142 |
| 28 | 4.3.7 | 3.6.17 | Tvá yujá | 5 | The same. | Indrá-Somau. | Trishṭup. | 144 |
| 29 | 4.3.8 | 3.6.18 | A' naḥ stutaḥ | 5 | ...... | Indraḥ. | The same. | 146 |
| 30 | 4.3.9 | 3.6.19 | Nakir indra | 24 | ...... | Indraḥ, 9–11 Indraḥ and Usháḥ. | Gáyatrí, 8 and 24 Anushṭup. | 148 |
| 31 | 4.3.10 | 3.6.24 | Kayá naḥ | 15 | ...... | Indraḥ. | Gáyatrí, 4 Pádanicṛit. | 155 |
| 32 | 4.3.11 | 3.6.27 | A' tú naḥ | 24 | ...... | Indraḥ, 23 and 24 Indrasyáśvau. | Gáyatrí. | 159 |
| 33 | 4.4.1 | 3.7.1 | Pra ṛibhubhyaḥ | 11 | ...... | Ribhavaḥ. | Trishṭup. | 166 |
| 34 | 4.4.2 | 3.7.3 | Ribhur vibhvá | 11 | ...... | The same. | The same. | 171 |
| 35 | 4.4.3 | 3.7.5 | Ihopa yáta | 9 | ...... | ...... | ...... | 175 |
| 36 | 4.4.4 | 3.7.7 | Anaśvo játaḥ | 9 | ...... | ...... | Jagatí, 9 Trishṭup. | 179 |
| 37 | 4.4.5 | 3.7.9 | Upa no vájá | 8 | ...... | ...... | Trishṭup. | 183 |
| 38 | 4.4.6 | 3.7.11 | Uto hi vám | 8 | ...... | Dadhikrává, 1 Dyávápṛithiví. | The same. | 186 |
| 39 | 4.4.7 | 3.7.13 | A'śum | 6 | ...... | Dadhikrává. | 1–5 Trishṭup, 6 Anushṭup. | 191 |
| 40 | 4.4.8 | 3.7.14 | Dadhikrávṇaḥ | 5 | ...... | The same. | 1 Trisht., 2–5 Jagatí. | 193 |
| 41 | 4.4.9 | 3.7.15 | Indrá ko vám | 11 | ...... | Indrá-Varuṇau. | Trishṭup. | 196 |
| 42 | 4.4.10 | 3.7.17 | Mama dvitá | 10 | Trasadasyuḥ Paurukutsyaḥ. | 1–6 A'tmá, 7–10 Indrá-Varuṇau. | The same. | 201 |
| 43 | 4.4.11 | 3.7.19 | Ka u śravat | 7 | Purumílha-Agamíḷhau Sauhotrau. | Aśvinau. | ...... | 205 |
| 44 | 4.4.12 | 3.7.20 | Tam vám | 7 | The same. | The same. | ...... | 208 |
| 45 | 4.4.13 | 3.7.21 | Esha sya | 7 | Vámadevaḥ. | ...... | Jagatí, 7 Trishṭup. | 211 |
| 46 | 4.5.1 | 3.7.22 | Agram piba | 7 | The same. | Váyuḥ, 1 Indra-Váyú. | Gáyatrí. | 214 |
| 47 | 4.5.2 | 3.7.23 | Vayo śukraḥ | 4 | ...... | 1 Váyuḥ, 2–4 Indra-Váyú. | Anushṭup. | 216 |
| 48 | 4.5.3 | 3.7.24 | Vihi hotráḥ | 5 | ...... | Váyuḥ. | The same. | 217 |
| 49 | 4.5.4 | 3.7.25 | Indram vám | 6 | ...... | Indrá-Bṛihaspatí. | Gáyatrí. | 219 |
| 50 | 4.5.5 | 3.7.26 | Yas tastambha | 11 | ...... | Bṛihaspatiḥ, 10 and 11 Bṛihaspatiḥ and Indraḥ. | Trishṭup, 10 Jagatí. | 221 |
| 51 | 4.5.6 | 3.8.1 | Idam u tyat | 11 | ...... | Usháḥ. | Trishṭup. | 226 |
| 52 | 4.5.7 | 3.8.3 | Prati shyá | 7 | ...... | The same. | Gáyatrí. | 231 |
| 53 | 4.5.8 | 3.8.4 | Tad devasya | 7 | ...... | Savitá. | Jagatí. | 233 |
| 54 | 4.5.9 | 3.8.5 | Abhúd devaḥ | 6 | ...... | The same. | Jagatí, 6 Trishṭup. | 236 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 55 | 4.5.10 | 3.8.6 | Ko vas trátá | 10 | Vámadevaḥ. | Viśve Deváḥ. | Trishṭup, 8–10 Gáyatrí. | 239 |
| 56 | 4.5.11 | 3.8.8 | Mahí | 7 | The same. | Dyává-Prithiví. | Trishṭup, 5–7 Gáyatrí. | 243 |
| 57 | 4.5.12 | 3.8.9 | Kshetrasya | 8 | ...... | 1–3 Kshetrapatiḥ, 4 Śunaḥ, 5 and 8 Śunásírau, 6 and 7 Sítá. | 1, 4, 6 and 7 Anushṭup, 5 Pura-ushṇik, 2, 3 and 8 Trishṭup. | 245 |
| 58 | 4.5.13 | 3.8.10 | Samudrát | 13 | ...... | Agniḥ, or Súryaḥ, or Ápaḥ, or Gávaḥ, or Ghṛitam. | 1–12 Jagatí, 13 Trishṭup. | 249 |
| 1 | 5.1.1 | 3.8.12 | Abodhi | 12 | Budhaḥ and Gavishṭhiraḥ, of the family of Atriḥ. | Agniḥ. | Trishṭup. | 256 |
| 2 | 5.1.2 | 3.8.14 | Kumáram | 12 | 2 and 9 Vṛiśaḥ, son of Jaraḥ, 1, 3–8, 10–12 Kumáraḥ, son of Atriḥ, or Vṛiśaḥ, or both. | The same. | 1–11 Trishṭup, 12 Śakvarí. | 261 |
| 3 | 5.1.3 | 3.8.16 | Tvam agne | 12 | Vasuśrutaḥ. | ...... | Trishṭup. | 267 |
| 4 | 5.1.4 | 3.8.18 | Tvám agne | 11 | The same. | ...... | The same. | 272 |
| 5 | 5.1.5 | 3.8.20 | Susamiddháya | 11 | ...... | Áprídevatáḥ. | Gáyatrí. | 277 |
| 6 | 5.1.6 | 3.8.22 | Agnim tam | 10 | ...... | Agniḥ. | Panktiḥ. | 280 |
| 7 | 5.1.7 | 3.8.24 | Sakháyaḥ | 10 | Ishaḥ. | ...... | 1–9 Anushṭup, 10 Panktiḥ. | 284 |
| 8 | 5.1.8 | 3.8.26 | Tvám agne | 7 | ...... | ...... | Jagatí. | 288 |
| 9 | 5.1.9 | 4.1.1 | Tvám agne | 7 | Gayaḥ. | ...... | Anushṭup, 5 and 7 Panktiḥ. | 293 |
| 10 | 5.1.10 | 4.1.2 | Agna ojishṭham | 7 | The same. | ...... | Anushṭup, 4 and 7 Panktiḥ. | 298 |
| 11 | 5.1.11 | 4.1.3 | Janasya | 6 | Sutambharaḥ. | ...... | Jagatí. | 303 |
| 12 | 5.1.12 | 4.1.4 | Prágnaye | 6 | The same. | ...... | Trishṭup. | 306 |
| 13 | 5.1.13 | 4.1.5 | Arcantaḥ | 6 | ...... | ...... | Gáyatrí. | 309 |
| 14 | 5.1.14 | 4.1.6 | Agnim | 6 | ...... | ...... | The same. | 311 |
| 15 | 5.2.1 | 4.1.7 | Pra vedhase | 5 | Dharuṇaḥ, the Áṅgirasaḥ. | ...... | Trishṭup. | 313 |
| 16 | 5.2.2 | 4.1.8 | Bṛihad vayaḥ | 5 | Púruḥ, the Átreyaḥ. | ...... | 1–4 Anushṭup, 5 Panktiḥ. | 315 |
| 17 | 5.2.3 | 4.1.9 | Á yajnaiḥ | 5 | The same. | ...... | The same. | 317 |
| 18 | 5.2.4 | 4.1.10 | Prátar agniḥ | 5 | Mṛiktavává Dvitaḥ. | ...... | ...... | 319 |
| 19 | 5.2.5 | 4.1.11 | Abhy avastháḥ | 5 | Vavriḥ. | ...... | 1 and 2 Gáyatrí, 3 and 4 Anushṭup, 5 Virádrúpá. | 321 |
| 20 | 5.2.6 | 4.1.12 | Yam agne | 4 | Prayasvantaḥ. | ...... | 1–3 Anushṭup, 4 Panktiḥ. | 322 |
| 21 | 5.2.7 | 4.1.13 | Manushvat | 4 | Sasaḥ. | ...... | The same. | 324 |
| 22 | 5.2.8 | 4.1.14 | Pra viśvasáman | 4 | Viśvasámá. | ...... | ...... | 326 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 23 | 5.2.9 | 4.1.15 | Agne sahantam | 4 | Dyumno Viśvacarshaṇiḥ. | Agniḥ. | 1–3 Anushṭup, 4 Panktiḥ. | 327 |
| 24 | 5.2.10 | 4.1.16 | Agne tvam | 4 | 1, 2, 3 and 4 Bandhuḥ, Subandhuḥ, Śrutabandhuḥ, Viprabandhuḥ, the Gaupáyanas or Laupáyanas. | The same. | Dvaipadam (vairájam). | 329 |
| 25 | 5.2.11 | 4.1.17 | Acchá vaḥ | 9 | Vasúyavaḥ. | ...... | Anushṭup. | 330 |
| 26 | 5.2.12 | 4.1.19 | Agne pávaka | 9 | The same. | ...... | Gáyatrí. | 333 |
| 27 | 5.2.13 | 4.1.21 | Anasvantá | 6 | Tryaruṇaḥ, son of Trivṛishṇaḥ; and Trasadasyuḥ, son of Purukutsaḥ; and Aśvamedhaḥ, son of Bharataḥ; or Atriḥ. | Agniḥ, 6 Indra-Agní. | 1–3 Trishṭup, 4–6 Anushṭup. | 336 |
| 28 | 5.2.14 | 4.1.22 | Samiddhaḥ | 6 | Viśvavárá Átreyí. | Agniḥ. | 1 and 3 Trishṭup, 2 Jagatí, 4 Anusht., 5 and 6 Gáyatrí. | 338 |
| 29 | 5.2.15 | 4.1.23 | Try aryamá | 15 | Gauravítiḥ, of the family of Śaktiḥ. | Indraḥ, 9*a* Indraḥ or Uśanáḥ. | Trishṭup. | 341 |
| 30 | 5.2.16 | 4.1.26 | Kva syaḥ | 15 | Babhruḥ. | Indraḥ, also king Riṇañcayaḥ. | The same. | 348 |
| 31 | 5.2.17 | 4.1.29 | Indro ratháya | 13 | Avasyuḥ. | Indraḥ, 8*c.d* Indraḥ or Kutsaḥ and Uśanáḥ, 9 Indraḥ and Kutsaḥ. | ...... | 354 |
| 32 | 5.2.18 | 4.1.32 | Adardaḥ | 12 | Gátuḥ. | Indraḥ. | ...... | 360 |
| 33 | 5.3.1 | 4.2.1 | Mahi mahe | 10 | Samvaraṇaḥ Prájápatyaḥ. | The same. | ...... | 365 |
| 34 | 5.3.2 | 4.2.3 | Ajátaśatrum | 9 | The same. | ...... | Jagatí, 9 Trishṭup. | 370 |
| 35 | 5.3.3 | 4.2.5 | Yas te | 8 | Prabhúvasuḥ (Ángirasaḥ). | ...... | 1–7 Anushṭup, 8 Panktiḥ. | 374 |
| 36 | 5.3.4 | 4.2.7 | Sa á gamat | 6 | The same. | ...... | Trishṭup, 3 Jagatí. | 377 |
| 37 | 5.3.5 | 4.2.8 | Sam bhánuná | 5 | Atriḥ. | ...... | Trishṭup. | 379 |
| 38 | 5.3.6 | 4.2.9 | Urosh ṭe | 5 | The same. | ...... | Anushṭup. | 382 |
| 39 | 5.3.7 | 4.2.10 | Yad indra | 5 | ...... | ...... | Anusht., 5 Panktih. | 383 |
| 40 | 5.3.8 | 4.2.11 | Á yáhy adribhiḥ | 9 | ...... | Indraḥ, 5 Súryaḥ, 6–9 Atriḥ. | 1–3 Ushṇik, 5 and 9 Anushṭup, 4, 6, 7 and 8 Trishṭup. | 385 |
| 41 | 5.3.9 | 4.2.13 | Ko nu vám | 20 | Atriḥ (Bhaumaḥ). | Viśve Deváḥ. | Trishṭup, 16 and 17 Atijagatí, 20 Ekapadá Viráṭ. | 389 |
| 42 | 5.3.10 | 4.2.17 | Pra śantamá | 18 | The same. | Viśve Deváḥ, 11 Rudraḥ. | Trishṭup, 17 Ekapadá. | 398 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 43 | 5.3.11 | 4.2.20 | Á dhenavaḥ | 17 | Atriḥ(Bhaumaḥ) | Viśve Deváḥ. | Trishṭ., 16 Ekapadá. | 406 |
| 44 | 5.3.12 | 4.2.23 | Tam pratnathá | 15 | Avatsáraḥ Káśyapaḥ, anye ca ṛishayo dṛishṭalingáḥ. | The same. | Jagatí, 14 and 15 Trishṭup. | 413 |
| 45 | 5.4.1 | 4.2.26 | Vidá divaḥ | 11 | Sadápṛiṇaḥ. | ...... | Trishṭup. | 420 |
| 46 | 5.4.2 | 4.2.28 | Hayo na | 8 | Pratikshatraḥ. | Viśve Deváḥ, 7 and 8 Devapatnyaḥ. | Jagatí, 7 and 8 Trishṭup. | 425 |
| 47 | 5.4.3 | 4.3.1 | Prayunjatí | 7 | Pratirathaḥ. | Viśve Deváḥ. | Trishṭup. | 430 |
| 48 | 5.4.4 | 4.3.2 | Kadu priyáya | 5 | Pratibhánuḥ. | The same. | Jagatí. | 433 |
| 49 | 5.4.5 | 4.3.3 | Devam vaḥ | 5 | Pratiprabhaḥ. | ...... | Trishṭup. | 436 |
| 50 | 5.4.6 | 4.3.4 | Viśvo devasya | 5 | Svastyátreyaḥ. | ...... | 1–4 Anushṭup, 5 Panktiḥ. | 438 |
| 51 | 5.4.7 | 4.3.5 | Agne sutasya | 15 | The same. | ...... | 1–4 Gáyatrí, 5–10 Ushṇik, 11–13 Jagatí or Trishṭup, 14 and 15 Anushṭup. | 440 |
| 52 | 5.4.8 | 4.3.8 | Pra śyáváśva | 17 | Śyáváśvaḥ. | Marutaḥ. | Anushṭup, 6 and 17 Panktiḥ. | 446 |
| 53 | 5.4.9 | 4.3.11 | Ko veda | 16 | The same. | The same. | 1, 5, 10, 11 and 15 Kakup, 2 Bṛihatí, 3 Anushṭup, 4 Puraushṇik, 6, 7, 9, 13, 14 and 16 Satobṛihatí, 8 and 12 Gáyatrí. | 453 |
| 54 | 5.4.10 | 4.3.14 | Pra śardháya | 15 | ...... | ...... | Jagatí, 14 Trishṭup. | 459 |
| 55 | 5.4.11 | 4.3.17 | Prayajyavaḥ | 10 | ...... | ...... | Jagatí, 10 Trishṭup. | 466 |
| 56 | 5.4.12 | 4.3.19 | Agne śardhantam | 9 | ...... | ...... | Bṛihatí, 3 and 7 Satobṛihatí. | 470 |
| 57 | 5.5.1 | 4.3.21 | Á rudrásaḥ | 8 | ...... | ...... | Jagatí, 7 & 8 Trishṭ. | 474 |
| 58 | 5.5.2 | 4.3.23 | Tam u núnam | 8 | ...... | ...... | Trishṭup. | 478 |
| 59 | 5.5.3 | 4.3.24 | Pra vaḥ spaṭ | 8 | ...... | ...... | Jagatí, 8 Trishṭup. | 481 |
| 60 | 5.5.4 | 4.3.25 | Íle agnim | 8 | ...... | Marutaḥ, or Agniḥ and Marutaḥ. | Trishṭup, 7 and 8 Jagatí. | 485 |
| 61 | 5.5.5 | 4.3.26 | Ko shṭhá naraḥ | 19 | ...... | 1–4 Marutaḥ, 5–8 Śaśíyasí Tarantamahishí, 9 Purumíḷho Vaidadaśviḥ, 10 Taranto Vaidadaśviḥ, 11–16 Marutaḥ, 17–19 Rathavítir Dálbhyaḥ. | Gáyatrí, 5 Anushṭup, 9 Satobṛihatí. | 489 |
| 62 | 5.5.6 | 4.3.30 | Ritena | 9 | Śrutavit. | Mitrá-Varuṇau. | Trishṭup. | 496 |
| 63 | 5.5.7 | 4.4.1 | Ritasya gopau | 7 | Arcanánáḥ. | The same. | Jagatí. | 500 |
| 64 | 5.5.8 | 4.4.2 | Varuṇam vaḥ | 7 | The same. | ...... | Anushṭ., 7 Panktiḥ. | 503 |
| 65 | 5.5.9 | 4.4.3 | Yaś ciketa | 6 | Rátahavyaḥ. | ...... | Anushṭ., 6 Panktiḥ. | 506 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 66 | 5.5.10 | 4.4.4 | Á cikitána | 6 | Rátahavyaḥ. | Mitrá-Varuṇau. | Anushṭup. | 509 |
| 67 | 5.5.11 | 4.4.5 | Bal itthá | 5 | Yajataḥ. | The same. | The same. | 511 |
| 68 | 5.5.12 | 4.4.6 | Pra vo mitráya | 5 | The same. | ...... | Gáyatrí. | 513 |
| 69 | 5.5.13 | 4.4.7 | Trí rocaná | 4 | Urucakriḥ. | ...... | Trishṭup. | 515 |
| 70 | 5.5.14 | 4.4.8 | Purúruṇá | 4 | The same. | ...... | Gáyatrí. | 516 |
| 71 | 5.5.15 | 4.4.9 | Á no gantam | 3 | Báhuvṛiktaḥ. | ...... | The same. | 518 |
| 72 | 5.5.16 | 4.4.10 | Á mitre | 3 | The same. | ...... | Ushṇik. | 519 |
| 73 | 5.6.1 | 4.4.11 | Yad adya | 10 | Pauraḥ. | Aśvinau. | Anushṭup. | 520 |
| 74 | 5.6.2 | 4.4.13 | Kúshṭho devau | 10 | The same. | The same. | The same. | 524 |
| 75 | 5.6.3 | 4.4.15 | Prati priyat. | 9 | Avasyuḥ. | ...... | Panktiḥ. | 528 |
| 76 | 5.6.4 | 4.4.17 | Á bháti | 5 | Atriḥ. | ...... | Trishṭup. | 532 |
| 77 | 5.6.5 | 4.4.18 | Prátaryáváṇá | 5 | The same. | ...... | The same. | 534 |
| 78 | 5.6.6 | 4.4.19 | Aśvinau | 9 | Saptavadhriḥ. | ...... | 1–3 Ushṇik, 4 Trishṭup, 5–9 Anushṭup. | 537 |
| 79 | 5.6.7 | 4.4.21 | Mahe naḥ | 10 | Satyaśraváḥ. | Usháḥ. | Panktiḥ. | 540 |
| 80 | 5.6.8 | 4.4.23 | Dyudadyámán. | 6 | The same. | The same. | Trishṭup. | 544 |
| 81 | 5.6.9 | 4.4.24 | Yunjate | 5 | Śyáváśvaḥ. | Savitá. | Jagatí. | 547 |
| 82 | 5.6.10 | 4.4.25 | Tat savituḥ | 9 | The same. | The same. | 1 Anushṭup, 2–9 Gáyatrí. | 549 |
| 83 | 5.6.11 | 4.4.27 | Acchá vada | 10 | Atriḥ. | Parjanyaḥ. | Trishṭup, 2–4 Jagatí, 9 Anushṭup. | 552 |
| 84 | 5.6.12 | 4.4.29 | Bal itthá | 3 | The same. | Pṛithiví. | Anushṭup. | 556 |
| 85 | 5.6.13 | 4.4.30 | Pra samráje | 8 | ...... | Varuṇaḥ. | Trishṭup. | 558 |
| 86 | 5.6.14 | 4.4.32 | Indrágní | 6 | ...... | Indra-Agní. | Anushṭup, 6 Viráṭ-púrvá. | 562 |
| 87 | 5.6.15 | 4.4.33 | Pra vo mahe | 9 | Evayámarut. | Marutaḥ. | Atijagatí. | 564 |
| 1 | 6.1.1 | 4.4.35 | Tvam hy agne | 13 | Bharadvájo Báṛhaspatyaḥ. | Agniḥ. | Trishṭup. | 571 |
| 2 | 6.1.2 | 4.5.1 | Tvam hi kshaitavat | 11 | The same. | The same. | Anushṭup, 11 Śakvarí. | 576 |
| 3 | 6.1.3 | 4.5.3 | Agne saḥ | 8 | ...... | ...... | Trishṭup. | 581 |
| 4 | 6.1.4 | 4.5.5 | Yathá hotaḥ | 8 | ...... | ...... | The same. | 585 |
| 5 | 6.1.5 | 4.5.7 | Huve vaḥ | 7 | ...... | ...... | ...... | 5[illegible] |
| 6 | 6.1.6 | 4.5.8 | Pra navyasá | 7 | ...... | ...... | ...... | 592 |
| 7 | 6.1.7 | 4.5.9 | Múrddhánam | 7 | ...... | Vaiśvánarágniḥ. | Trishṭ., 6 & 7 Jagatí. | 595 |
| 8 | 6.1.8 | 4.5.10 | Pṛikshasya | 7 | ...... | The same. | Jagatí, 7 Trishṭup. | 599 |
| 9 | 6.1.9 | 4.5.11 | Ahaś ca | 7 | ...... | ...... | Trishṭup. | 602 |
| 10 | 6.1.10 | 4.5.12 | Puro vaḥ | 7 | ...... | Agniḥ. | Trishṭ., 7 Dvipadá. | 607 |
| 11 | 6.1.11 | 4.5.13 | Yajasva | 6 | ...... | The same. | Trishṭup. | 610 |
| 12 | 6.1.12 | 4.5.14 | Madhye hotá | 6 | ...... | ...... | The same. | 612 |
| 13 | 6.1.13 | 4.5.15 | Tvad viśvá | 6 | ...... | ...... | ...... | 615 |
| 14 | 6.1.14 | 4.5.16 | Agná yaḥ | 6 | ...... | ...... | Anushṭ., 6 Śakvarí. | 618 |
| 15 | 6.1.15 | 4.5.17 | Imam ú shu | 19 | Bharadvájaḥ or Vítahavyaḥ (Ángirasaḥ). | ...... | Jagatí, 3 and 15 Śakvarí, 6 Atiśakvarí, 10–14, 16 and 19 Trishṭ., 17 Anushṭup, 18 Bṛihatí. | 620 |

